इति मन्त्रेण कलशे पवित्र[१] क्षिपेत् ।

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म्म सप्रथाः ॥

इति सप्तमृदः[२] क्षिपेत् ।

ॐ याः फलिनीर्य्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳ हसः ॥

इति कलशे पूगीफलं प्रक्षिपेत् ।

ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥

इति [३]पञ्चरत्नानि ।

इसके बाद 'ॐ पवित्रे स्थो०' इस मन्त्र से कुश की पवित्री कलश में छोड़कर, 'ॐ स्योना पृथिवी नो०' से 'शर्म सप्रथा:' मन्त्र पढ़कर सप्तमृत्तिका (सात जगह की मिट्टी), 'ॐ या: फलिनीर्या अफला०' से 'मुञ्चन्त्वꣳ. हस:' तक मन्त्र पढ़कर सोपारी, 'ॐ परि

१. पवित्रलक्षणं कात्यायनेनोक्तं यथा -
नाऽन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र-कुत्रचित् ॥

२. अश्वस्थानाद् गजस्थानाद् वल्मीकात् सङ्गमाद् ह्रदात् ।
राजद्वाराच्च गोष्ठाच्च मृदमानीय निःक्षिपेत् ॥

३. कनकं कुलिशं मुक्ता पद्मरागं च नीलकम् ।
एतानि पञ्चरत्नानि सर्वकार्येषु योजयेत् ॥

अथवा

वज्र-मौक्तिक-वैडूर्य-प्रवालं चेन्द्रनीलकम् ।
अलाभे सर्वरत्नानां हेमं सर्वत्र योजयेत् ॥

ॐ हि॒र॒ण्य॒ग॒र्ब्भः स॒मव॑र्त्त॒ताग्ग्रे॑ भू॒तस्य॑ जा॒तः प॑ति॒रेक॑ ऽआसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ व्विधेम ॥

इति कलशे हिरण्यं क्षिपेत् ।

ॐसुजा॑तो॒ ज्ज्योति॑षा स॒ह शर्म्म॒ व्वरू॑थ॒मास॑द॒त्स्वः॑ । व्वासो॑ऽअग्ग्ने व्वि॒श्वरू॑प॒ᳬ संव्व्य॑यस्व व्विभावसो ॥

इति युग्मवस्त्रेण कलशं वेष्टयेत् ।

ॐ पू॒र्ण्णा द॑र्व्वि॒ परा॑प॒त सुपू॑र्ण्णा॒ पुन॒राप॑त । व्व॒स्नेव॑ व्विक्क्री॑णावहा॒ ऽइष॒मूर्ज्जᳬ॑ शतक्क्रतो ॥

इति कलशोपरि पूर्णपात्रं न्यसेत् ।

'ॐ याः फ॒लिनी॒र्य्या ऽअ॑फ॒ला०' ॥

इति मन्त्रेण कलशोपरि नारिकेलफलं संस्थाप्य ।

ॐ तत्त्वा॑ यामि॒ ब्ब्रह्म॑णा॒ व्वन्द॑मान॒स्तदाशा॑स्ते॒ यज॑मानो ह॒विर्ब्भिः॑ । अहे॑डमानो व्वरुणे॒ह बो॒ध्युरु॑शᳬस॒ मा न॒ ऽआयुः॒ प्प्रमो॑षीः ॥

---

वाजपतिः०' से 'दाशुषे' तक मन्त्र से पंचरत्न, 'ॐ हिरण्यगर्भः०' से 'हविषा विधेम' पर्यन्त मन्त्र पढ़कर उस कलश में सुवर्ण (द्रव्य) छोड़कर 'ॐ सुजातो ज्योतिषा०' से 'विभावसो०' तक मन्त्र पढ़कर चारों तरफ से कलश में दो वस्त्र लपेटे ।

तदनन्तर 'ॐ पूर्णा दर्वि०' इस मन्त्र से कलश पर पूर्णपात्र (तांबे या कसोरे में चावल भर कर) रख उस पर 'ॐ या

अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि। ॐ अपांपतये वरुणाय नमः। इति [१]पञ्चोपचारैर्वरुणं सम्पूज्य, ततो गङ्गाद्यावाहनं कुर्यात् ।

कलाकला हि देवानां दानवानां कलाकलाः ।
संगृह्य निर्मितो यस्मात् कलशस्तेन कथ्यते ।।१।।
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।।२।।
कुक्षौ तु सागराः सप्त सप्तद्वीपा च मेदिनी ।
अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ।।३।।
कावेरी कृष्णवेणा च गङ्गा चैव महानदी ।
तापी गोदावरी चैव माहेन्द्री नर्मदा तथा ।।४।।
नदाश्च विविधा जाता नद्यः सर्वास्तथापराः ।
पृथिव्यां यानि तीर्थानि कलशस्थानि तानि वै ।।५।।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।।६।।

फलिनी०' इस उपर्युक्त मन्त्र से उस कलश पर (अपने सामने) लाल वस्त्र आदि लपेट कर नारिकेल फल रखे । तथा 'ॐ तत्त्वा यामि ब्रह्मणा०' से लेकर 'प्रमोषीः' पर्यन्त मन्त्र तथा 'अस्मिन् कलशे०' वाक्य पढ़कर, उस कलश में अंगसहित सपरिवार, सायुध-सशक्तिक वरुण का आवाहन और स्थापन करे। एवं 'ॐ अपांपतये वरुणाय नमः' से वरुण का पंचोपचार से पूजन करे ।

१. गन्ध-पुष्पौ धूप-दीपौ नैवेद्येति पञ्चकः ।
पञ्चोपचारमाख्यातं धूपयेत्तत्त्वविद् बुधः ।।

ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।।७।।
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ।।८।।

यजमानः स्वहस्ते अक्षतान् गृहीत्वा,

ॐ मनो॑ जू॒तिर्जु॑षता॒माज्ज्य॑स्य॒ बृह॒स्प्पति॑र्य्य॒ज्ञमि॒मं तनो॒त्वरि॑ष्टं॒ य्य॒ज्ञꣳ समि॒मं द॑धातु ।
व्विश्श्वे॑दे॒वास॑ऽइ॒ह मा॑दयन्ता॒मो३म्प्रति॑ष्ठ ॥

कलशे वरुणाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवन्तु । ॐ वरुणाद्यावाहितदेवताभ्यो नमः। विष्णवाद्यावाहितदेवताभ्यो नमः, इति वा । आसनार्थेऽक्षतान् समर्पयामि । पादयोः पाद्यं समर्पयामि । हस्तयोः अर्घ्यं समर्पयामि । आचमनं समर्पयामि । पञ्चामृतस्नानं समर्पयामि । शुद्धोदकस्नानं समर्पयामि । स्नानाङ्गाचमनं समर्पयामि। वस्त्रं समर्पयामि । आचमनं समर्पयामि। यज्ञोपवीतं समर्पयामि । आचमनं समर्पयामि । उपवस्त्रं समर्पयामि । आचमनं समर्पयामि । गन्धं समर्पयामि । अक्षतान् समर्पयामि । पुष्पमालां समर्पयामि । नानापरिमलद्रव्याणि

---

तत्पश्चात् 'कलाकला हि देवानां०' से 'दुरितक्षयकारकाः' तक आठ श्लोकों से उस कलश में गङ्गा आदि नदियों का आवाहन करे ।

यजमान अपने दाहिने हाथ में अक्षत लेकर 'ॐ मनो जूतिर्जुषतामाज्यस्य०' से 'विष्णवाद्यावाहितदेवताभ्यो नमः' तक

समर्पयामि । धूपमाघ्रापयामि । दीपं दर्शयामि । हस्त-प्रक्षालनम् । नैवेद्यं समर्पयामि । आचमनीयं समर्पयामि । मध्ये पानीयम् उत्तरापोशनं च समर्पयामि । ताम्बूलं समर्पयामि । पूगीफलं समर्पयामि । कृतायाः पूजायाः षाड्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि । आर्तिक्यं समर्पयामि । मन्त्रपुष्पाञ्जलिं समर्पयामि । प्रदक्षिणां समर्पयामि । नमस्कारं समर्पयामि । अनया पूजया वरुणाद्यावाहितदेवताः प्रीयन्तां न मम ।

कलश-प्रार्थना –

देव-दानव-संवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ ! विधृतो विष्णुना स्वयम् ।।१।।
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ।।२।।
शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः स-पैतृकाः ।।३।।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ! ।
सान्निध्यं कुरु मे देव ! प्रसन्नो भव सर्वदा ।।४।।
नमो नमस्ते स्फटिकप्रभाय
सुश्वेतहाराय सुमङ्गलाय ।

---

पढ़कर कलश पर अक्षत छिड़ककर 'आसनार्थे अक्षतान् समर्पयामि' से 'प्रीयन्तां न मम' तक पढ़कर प्रत्येक वाक्यों से वरुणाद्यावाहित देवताओं का षोडशोपचार से पूजन करे ।

सुपाशहस्ताय झषासनाय
जलाधिनाथाय नमो नमस्ते ।।५।।
पाशपाणे ! नमस्तुभ्यं पद्मिनीजीवनायक ! ।
पुण्याहवाचनं यावत् तावत्त्वं सन्निधो भव ।।६।।

*इति दुर्गार्चनपद्धतौ कलशपूजनं समाप्तम् ।*

●

# पुण्याहवाचनम्

अवनिकृत-जानुमण्डलः कमल-मुकुल-सदृशमञ्जलिं शिरस्याधायाऽनन्तरं दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा आशिषः प्रार्थयेत् ।

यजमानः-'दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च।
तेनाऽऽयुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ।'

विप्राः- 'अस्तु दीर्घमायुः' ।

---

कलश-प्रार्थना - पश्चात् 'देवदानवसंवादे०' से आरम्भ कर 'तावत्त्वं सन्निधो भव' पर्यन्त श्लोक पढ़कर कलश की प्रार्थना करनी चाहिए।

*इस प्रकार दुर्गार्चनपद्धति में कलशपूजन समाप्त ।*

●

पुण्याहवाचन - दोनों घुटनों को पृथ्वी पर मोड़कर, कमल के सदृश अपनी अंजलि को सिर पर रखकर, दाहिने हाथ में सोने आदि के जलपूर्ण कलश को अपने सिर से स्पर्श कर यजमान अपने आशीर्वाद के लिए ब्राह्मणों से प्रार्थना करे ।

यजमान - 'दीर्घा नागा०' से लेकर 'दीर्घमायुरस्तु' तक कहे।

ब्राह्मण लोग कहें - 'अस्तु दीर्घमायुः' ।

ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा ऽअदाभ्यः । अतो धर्म्माणि धारयन् ॥

'तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु'- इति यजमानः।

'पुण्यं पुण्याहं दीर्घमायुरस्तु'- इति द्विजाः ।

एवं द्विरपरं शिरसि भूमौ निधाय ।

यजमानः ब्राह्मणानां हस्ते 'ॐ शिवा [१]आपः सन्तु' इति दद्यात् । 'सन्तु शिवा आपः' इति ब्राह्मणाः ।

एवं सर्वत्र वचनोत्तरं दद्युः ।

यजमानः– 'सौमनस्यमस्तु' इति पुष्पम्[२] ।

विप्राः– 'अस्तु सौमनस्यम्' ।

यजमानः– 'अक्षतं चाऽरिष्टं चाऽस्तु' इत्यक्षतान्[३] ।

---

फिर यजमान कहे - 'ॐ त्रीणि पदा विचक्रमे०' से 'पुण्याहं दीर्घमायुरस्तु' तक कहे । पुनः ब्राह्मण कहें - 'पुण्यं पुण्याहं दीर्घमायुरस्तु' ।

इस प्रकार दो बार सिर से उस कलश का स्पर्श कर यथा स्थान रखे। फिर यजमान ब्राह्मणों के हाथ में 'शिवा आपः सन्तु' कह कर जल दे ।

ब्राह्मण कहें - 'सन्तु शिवा आपः' ।

---

१. अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ।
ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु ते ॥

२. लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
सा मे वसतु वै नित्यं सौमनस्यं तथाऽस्तु नः ॥

३. अक्षतं चाऽस्तु मे पुण्यं दीर्घमायुर्यशोबलम् ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥

**विप्राः – 'अस्तवक्षतमरिष्टं च' ।**

**यजमानः – 'गन्धाः पान्तु' इति गन्धम् ।**

**विप्राः – 'सुमङ्गल्यं चाऽस्तु' ।**

**यजमानः – 'अक्षताः पान्तु'। विप्राः – 'आयुष्यमस्तु'।**

**यजमानः – 'पुष्पाणि पान्तु'। विप्राः – 'सौश्रियमस्तु'।**

**यजमानः –'सफलताम्बूलानि पान्तु'। विप्राः –'ऐश्वर्यमस्तु'।**

**यजमानः – 'दक्षिणाः पान्तु'। विप्राः – 'बहुदेयं चास्तु'।**

---

इस प्रकार सब जगह यजमान के कहने पर ब्राह्मण उत्तर-प्रत्युत्तर देवें ।

यजमान- 'सौमनस्यमस्तु' पढ़कर ब्राह्मणों के हाथ में पुष्प दे।

ब्राह्मण कहें- 'अस्तु सौमनस्यम्' ।

यजमान- 'अक्षत चाऽरिष्टं चाऽस्तु' पढ़कर अक्षत देवे ।

ब्राह्मण कहें- 'अस्त्वक्षतमरिष्टं च' ।

फिर यजमान- 'गन्धाः पान्तु' कहकर ब्राह्मणों को चन्दन लगावे।

ब्राह्मण कहें- 'सुमंगल्यं चाऽस्तु' ।

यजमान- 'अक्षताः पान्तु' से ब्राह्मणों के हाथ में अक्षत दे ।

ब्राह्मण कहें- 'आयुष्यमस्तु' ।

यजमान- 'पुष्पाणि पान्तु' से ब्राह्मणों के हाथ में पुष्प प्रदान करे।

ब्राह्मण कहें- 'सौश्रियमस्तु' ।

पुनः यजमान- 'सफल-ताम्बूलानि पान्तु' कहकर ब्राह्मणों को फल और ताम्बूल देवे ।

ब्राह्मण कहें- 'ऐश्वर्यमस्तु' ।

यजमान- 'दक्षिणाः पान्तु' पढ़कर ब्राह्मणों को दक्षिणा देवे ।

ब्राह्मण कहें- 'बहुदेयं चाऽस्तु' ।

यजमानः – 'पुनरत्राऽऽपः पान्तु'। विप्राः – 'स्वर्चितमस्तु'।

यजमानः – 'दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चाऽऽयुष्यं चाऽस्तु'।

विप्राः – 'तथाऽस्तु'।

यजमानः – 'यं कृत्वा सर्ववेद-यज्ञ-क्रियाकरण-कर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा, ऋग्-यजुः-सामा-ऽथर्वा-ऽऽशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये'।

विप्राः - 'वाच्यताम्'।

करोतु स्वस्ति ते ब्रह्मा स्वस्ति चाऽपि द्विजातयः ।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा ।।१।।
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः ।
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु नित्यशः ।।२।।
स्वस्ति तेऽस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च ।
स्वस्त्यस्त्वापादकेभ्यश्च सर्वेभ्यः स्वस्ति ते सदा ।।३।।
स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ।
करोतु स्वस्ति वेदादिर्नित्यं तव महामखे ।।४।।

---

यजमान- 'पुनरत्रापः पान्तु' कहकर जल दे ।
ब्राह्मण कहें- 'स्वर्चितमस्तु' ।
पुनः यजमान- 'दीर्घमायुः०' से 'चायुष्यं चाऽस्तु' तक कहे ।
ब्राह्मण कहें- 'तथाऽस्तु' ।
यजमान- 'यं कृत्वा०' से 'पुण्यं पुण्याहं वाचयिष्ये' तक कहे।
उत्तर में ब्राह्मण- 'वाच्यताम्' तथा 'करोतु स्वस्ति ते ब्रह्मा' से

लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ।
असितो देवलश्चैव विश्वामित्रस्तथाऽङ्गिराः ।।५।।
वशिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते सदा।
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ।।६।।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः।
विवस्वान् भगवान् स्वस्ति करोतु तव सर्वदा ।।७।।
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः।
अधस्ताद् धरणीं चाऽसौ नागो धारयते हि यः ।।८।।
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ।

ॐ द्रविणोदाः पिपीषति जुहोत प्प्रचतिष्ठुत। नेष्ट्राद्दृतुभिरिष्ष्यत ॥१॥ सविता त्त्वा सवानाᳬ सुवतामग्निर्ग्गृहपतीनाᳬसोमो व्वनस्प्पतीनाम्। बृहस्प्पतिर्व्वाच ऽइन्द्रोज्ज्यैष्ठ्याय रुद्रः पशुब्भ्यो मित्त्रः सत्त्यो व्वरुणो धर्म्मपतीनाम् ॥२॥ न तद्रक्षाᳬसि न पिशाचास्त्तरन्ति देवानामोजः प्प्रथमजᳬह्येतत्। यो बिभर्त्ति दाक्षायणᳬ हिरण्ण्यᳬ स देवेषु कृणुते दीर्ग्घमायुः सम्मनुष्ष्येषु कृणुते दीर्ग्घमायुः ॥३॥ उच्चा ते जातमन्धसो दिवि सद्भूम्म्यादंदे। उग्ग्रᳬ शर्म्म महि श्रवः ॥४॥ उपास्म्मै गायता नरः पवमानायेन्दवे। अभि देवाँ२॥ ऽइयक्षते॥५॥

---

लेकर 'अभि देवां इयक्षते' तक श्लोक-मन्त्र पढ़ें।

इत्येता ऋचः पुण्याहे ब्रूयात् ।

'व्रत-जप-नियम-तपः-स्वाध्याय-क्रतु-शम-दम-दया-दान-विशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्' इति यजमानः । 'समाहितमनसः स्मः' इति ब्राह्मणाः ।

'प्रसीदन्तु भवन्तः' इति यजमानः ।

'प्रसन्नाः स्मः' इति ब्राह्मणाः ।

ततो यजमानोब्रूयात्- 'शान्तिरस्तु' इत्यादि। 'अस्त्व'ति द्विजाः। एवं वचनं प्रतिवचनं सर्वत्र दद्युः। ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ तुष्टिरस्तु। ॐ वृद्धिरस्तु। ॐ अविघ्नमस्तु। ॐ आयुष्यमस्तु। ॐ आरोग्यमस्तु। ॐ शिवमस्तु। ॐ शिवं कर्माऽस्तु। ॐ कर्मसमृद्धिरस्तु। ॐ धर्मसमृद्धिरस्तु। ॐ वेद-समृद्धिरस्तु। ॐ शास्त्रसमृद्धिरस्तु। ॐ धनधान्य-समृद्धिरस्तु। ॐ इष्टसम्पदस्तु। (बहिः) ॐ अरिष्ट-निरसनमस्तु। ॐ यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु। (अन्तः) ॐ यच्छ्रेयस्तदस्तु। ॐ उत्तरे कर्मणि निर्विघ्नमस्तु। ॐ उत्तरोत्तरमहरहरभिवृद्धि-

---

फिर यजमान- 'व्रत-जप-नियम०' से 'मनः समाधीयताम्' तक कहे।

ब्राह्मण कहें- 'समाहितमनसः स्मः' ।

फिर यजमान कहे- 'प्रसीदन्तु भवन्तः' ।

ब्राह्मण कहें- 'प्रसन्नाः स्मः' ।

इसके बाद यजमान बायें हाथ में अक्षत लेकर दाहिने हाथ से

रस्तु। ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्। ॐ तिथि-करण-मुहूर्त-नक्षत्र-ग्रह-लग्न-सम्पदस्तु। ॐ तिथि-करण-मुहूर्त-नक्षत्र-ग्रह-लग्नाधि-देवताः प्रीयन्ताम्। ॐ तिथिकरणे स-मुहूर्ते स-नक्षत्रे स-ग्रहे स-लग्ने साधिदैवते प्रीयेताम्। ॐ दुर्गा-पाञ्चाल्यौ प्रीयेताम्। ॐ अग्निपुरोगाः विश्वेदेवाः प्रीयन्ताम्। ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम्। ॐ वसिष्ठपुरोगाः ऋषिगणाः प्रीयन्ताम्। ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्। ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्। ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्। ॐ श्रीसरस्वत्यौ प्रीयेताम्। ॐ श्रद्धामेधे प्रीयेताम्। ॐ भगवती कात्यायनी प्रीयताम्। ॐ भगवती माहेश्वरी प्रीयताम्। ॐ भगवती ऋद्धिकरी प्रीयताम्। ॐ भगवती वृद्धिकरी प्रीयताम्। ॐ भगवती पुष्टिकरी प्रीयताम्। ॐ भगवती तुष्टिकरी प्रीयताम्। ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम्। ॐ सर्वाः कुलदेवताः प्रीयन्ताम्। ॐ सर्वाः ग्रामदेवताः प्रीयन्ताम्। ॐ सर्वा इष्टदेवताः प्रीयन्ताम्। (बहिः) ॐ हताश्च- ब्रह्मद्विषः। हताश्च परिपन्थिनः। ॐ हताश्च

---

'ॐ शान्तिरस्तु' से लेकर 'पुण्यं पुण्याहं वाचयिष्ये' तक वाक्य पढ़कर कलश पर दो-दो दाना अक्षत चढ़ावे। इन वाक्यों के मध्य 'ॐ अरिष्टनिरसनमस्तु' से लेकर 'तद्दूरे प्रतिहतमस्तु' तथा 'ॐ

विघ्नकर्त्तारः । ॐ शत्रवः पराभवं यान्तु । ॐ शाम्यन्तु घोराणि । ॐ शाम्यन्तु पापानि । ॐ शाम्यन्त्वीतयः । ॐ शाम्यन्तूपद्रवाः । (अन्तः) ॐ शुभानि वर्धन्ताम् । ॐ शिवा आपः सन्तु । ॐ शिवा ऋतवः सन्तु । ॐ शिवा ओषधयः सन्तु । ॐ शिवा वनस्पतयः सन्तु। ॐ शिवा अतिथयः सन्तु । ॐ शिवा अग्नयः सन्तु । ॐ शिवा आहुतयः सन्तु । ॐ अहोरात्रे शिवे स्याताम् ।

ॐ निकामे निकामे नः पर्ज्जन्यो व्वर्षतु फलवत्यो न ऽओषधयः पच्च्यन्तां य्योगक्षेमो नः कल्पताम् ॥

ॐ शुक्रा-ऽङ्गारक-बुध-बृहस्पति-शनैश्चर-राहु-केतु-सोम-सहितादित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । ॐ भगवान् नारायणः प्रीयताम् । ॐ भगवान् पर्जन्यः प्रीयताम् । ॐ भगवान् स्वामी महासेनः प्रीयताम् । पुरोऽनुवाक्यया यत्पुण्यं तदस्तु । याज्या यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्योदये यत्पुण्यं तदस्तु । एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये, इति यजमानः । 'ॐ वाच्यतामि'ति ब्राह्मणाः ।

ॐ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् ।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥
भो ब्राह्मणाः ! मया क्रियमाणस्य दुर्गापूजनाख्यस्य

---

हताश्च ब्रह्मद्विषः' से 'ॐ शाम्यन्तूपद्रवाः' तक पढ़कर अलग-अलग कसोरे में अक्षत छोड़े ।

ब्राह्मण- 'ॐ वाच्यताम्' इस प्रकार कहें ।

(शतचण्डी-सहस्रचण्डी-नवचण्डी वा) कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति यजमानः। 'ॐ पुण्याहं पुण्याहं पुण्याहम्' इति ब्राह्मणाः ।

'ॐ अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु' इति यजमानः। 'पुण्याहम्-३' इति ब्राह्मणाः। एवं वचनं प्रतिवचनं च त्रिःपठित्वा ।

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्श्वा भूतानि जातवेदः पुनीहि मा ॥**

-इति ब्राह्मणाः ।

पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ।
ऋषिभिः सिद्ध-गन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥

भो ब्राह्मणाः! मया क्रियमाणस्य दुर्गापूजनाख्यस्य (शतचण्डी-सहस्रचण्डी-नवचण्डी वा) कर्मणः कल्याणं भवन्तो ब्रुवन्तु । ॐ कल्याणं कल्याणं कल्याणम् ।

**ॐ यथेमां व्वाचंकल्याणीमावदानि जनेब्भ्यः। ब्ब्रह्मराजन्न्याभ्याᳬं शूद्राय चार्व्याय च स्वाय**

---

पुनः यजमान- 'ॐ ब्राह्मं पुण्यमहर्यच्च०' से 'भवन्तो ब्रुवन्तु' तक तीन बार कहे ।

ब्राह्मण भी तीन बार 'ॐ पुण्याहं पुण्याहं पुण्याहम्' इस प्रकार कहकर 'ॐ पुनन्तु मा देवजनाः' इस मन्त्र को पढ़ें ।

फिर यजमान के 'पृथिव्यामुद्धृतायां तु०' से 'भवन्तो ब्रुवन्तु' पर्यन्त कहने पर ब्राह्मण तीन बार 'ॐ कल्याणम्', 'कल्याणम्', 'कल्याणम्', कहकर 'ॐ यथेमां वाचं०' मन्त्र पढ़ें ।

चारणाय च । प्प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुप मादो नमतु ॥

इति ब्राह्मणाः पठेयुः ।

सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ।
सम्पूर्णा सुप्रभावा च तामृद्धिं प्रब्रुवन्तु नः ॥

भो ब्राह्मणाः ! मया क्रियमाणस्य दुर्गापूजनाख्यस्य कर्मणः ऋद्धिं भवन्तो ब्रुवंतु, इति यजमानः । 'ॐ कर्म ऋध्यताम् ३', इति ब्राह्मणाः।

ॐ सत्रस्य ऽऋद्धिरस्यगन्म ज्ज्योतिरमृता ऽअभूम । दिवम्पृथिव्या ऽअद्ध्यारुहामाविदामदेवाँन्त्स्वज्ज्योतिः ॥

स्वस्तिस्तु या विनाशाख्या पुण्य-कल्याण-वृद्धिदा ।
विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥

भो ब्राह्मणाः! मया क्रियमाणस्य दुर्गापूजनाख्यकर्मणः स्वस्ति भवन्तो ब्रुवन्तु, इति यजमानः । 'ॐ आयुष्मते स्वस्ति ३' इति ब्राह्मणाः ।

ॐ स्वस्ति न ऽइन्द्रो व्वृद्धश्श्रवाः स्वस्ति नः पूषा व्विश्श्ववेदाः । स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्तिनो बृहस्प्पतिर्द्दधातु ॥

---

फिर यजमान 'सागरस्य तु या०' से 'भवन्तो ब्रुवन्तु' तक पढ़े ।

ब्राह्मण- 'ॐ कर्म ऋध्यताम्' इसे तीन बार कहकर, 'ॐ सत्रस्य ऋद्धिरस्यगन्म०' मन्त्र को पढ़ें ।

पुनः यजमान के 'स्वस्तिस्तु या०' से 'भवन्तो ब्रुवन्तु' तक

समुद्रमथनाज्जाता जगदानन्दकारिका ।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ।।

भो ब्राह्मणाः ! मया क्रियमाणस्य दुर्गापूजनाख्यस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु, इति यजमानः । 'ॐ अस्तु श्रीः ३', इति ब्राह्मणाः ।

**ॐ श्रीश्श्च ते लक्ष्मीश्श्च पत्न्यावहोरात्रे पार्श्वे नक्षत्त्राणि रूपमश्श्विनौ व्यात्तम् । इष्ण्णन्निषाणामुं म ऽइषाण सर्व्वलोकम्म ऽइषाण ।।**

मृकण्डसूनोरायुर्यद्ध्रुवलोमशयोस्तथा ।
आयुषा तेन संयुक्ता जीवेम शरदः शतम् ।।

-इति यजमानः। 'शतं जीवन्तु भवन्तः' इति ब्राह्मणाः ।

**ॐ शतमिन्नु शरदो ऽअन्ति देवा यत्त्रा नश्श्चक्का जरसन्तनूनाम् । पुत्त्रासो यत्त्र पितरो भवन्ति मा नो मद्ध्या रीरिषतायुर्ग्गन्तोः ।।**

---

पढ़ने पर ब्राह्मण 'ॐ आयुष्मते स्वस्ति' तक पढ़कर 'ॐ स्वस्ति न इन्द्रो०' मन्त्र पढ़ें ।

पुनः यजमान-द्वारा 'समुद्रमथनाज्जाता०' से 'भवन्तो ब्रुवन्तु' तक पढ़ने पर ब्राह्मण 'ॐ अस्तु श्रीः' तीन बार कहकर, 'ॐ श्रीश्च ते लक्ष्मीश्च०' मन्त्र पढ़ें ।

फिर यजमान 'मृकण्डसूनो०' से 'शरदः शतम्' तक पढ़े । उत्तर में ब्राह्मण 'शतं जीवन्तु भवन्तः' ऐसा कहकर 'ॐ शतमिन्नुशरदो०' से 'गन्तोः' तक का पाठ करें ।

शिव-गौरी विवाहे या या श्रीरामे नृपात्मजे ।
धनदस्य गृहे या श्रीरस्माकं साऽस्तु सद्मनि ।।

-इति यजमानः । 'ॐ अस्तु श्रीः' इति ब्राह्मणाः ।

ॐ मनसः कामुमाकूतिं व्वाचः सत्यमशीय । पशूनाᳬ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥

प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट् ।
भगवाञ्छाश्वतो नित्यं नो वै रक्षन्तु सर्वतः ।।

ॐ भगवान् प्रजापतिः प्रीयताम् ।

ॐ प्प्रजापते न त्वदेतान्न्यन्न्यो व्विश्श्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्त्वयममुष्ष्य पितासावस्य पिता व्वयᳬस्याम पतयो रयीणाᳬ स्वाहा ॥

आयुष्मते स्वस्तिमते यजमानाय दाशुषे ।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ।।

---

यजमान- 'शिव-गौरी-विवाहे०' से 'अस्तु सद्मनि' तक श्लोक पढ़े । प्रतिवचन में ब्राह्मण 'ॐ अस्तु श्रीः' कहकर, 'ॐ मनसः काममाकूतिं०' मन्त्र पढ़ें ।

फिर यजमान के द्वारा 'प्रजापतिर्लोकपालो०' से 'नो वै रक्षन्तु सर्वतः' तक पढ़ने पर 'ॐ भगवान् प्रजापतिः प्रीयताम्' इस वाक्य को ब्राह्मण कहें। तथा 'ॐ प्रजापते न त्वदेतां०' से 'रयीणाᳬ. स्वाहा०' तक मन्त्र पढ़ें ।

- इति यजमानः। 'आयुष्मते स्वस्ति' इति ब्राह्मणाः।

ॐ प्रति पन्थामपद्महि स्वस्ति गामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥

स्वस्तिवाचनसमृद्धिरस्तु ।

कृतस्य स्वस्तिवाचन कर्मणः समृद्ध्यर्थं स्वस्तिवाचकेभ्यो ब्राह्मणेभ्य इमां दक्षिणां विभज्य दातुमहमुत्सृजे ।

## अभिषेकः

एकस्मिन् पात्रे वरुणोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणाः दूर्वा-ऽऽम्रपल्लवैः सकुटुम्बं वामभागस्थितां पत्नीं यजमानं चाऽभिषिञ्चेयुः ।

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः

---

यजमान के द्वारा 'आयुष्मते स्वस्तिमते०' से 'वेदपारगैः' पर्यन्त श्लोक पढ़ने पर ब्राह्मण-गण 'आयुष्मते स्वस्ति' वाक्य उच्चारण कर 'प्रति पन्थामपद्महि०' से 'स्वस्तिवाचनसमृद्धिरस्तु' पर्यन्त पढ़ें।

तत्पश्चात् यजमान- 'कृतस्य स्वस्तिवाचनकर्मणः०' से 'दातुमहमुत्सृजे' तक संकल्प-वाक्य पढ़कर स्वस्तिवाचन करने वाले ब्राह्मणों को दक्षिणा दे।

अभिषेक - तदनन्तर अविधुर (विवाहित, पत्नी जिनकी जीवित हो) ब्राह्मण हाथ में कलश के जल को किसी दूसरे पात्र में लेकर दूर्वा एवं आम्रपल्लव-सहित उस जल से (उत्तरमुख बैठे हुए या

शान्तिर्व्विश्श्वे देवाः शान्तिर्ब्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

यतो यतः समीहसे ततो नो ऽअभयङ्कुरु ।
शन्नः कुरु प्प्रजाब्भ्यो ऽअभयन्नः पशुब्भ्यः ॥

*इति आचार्य-पण्डित-श्रीशिवदत्तमिश्र-शास्त्रि-विरचितायां दुर्गार्चनपद्धतौ पुण्याहवाचनप्रयोगः समाप्तः ।*

●

## मातृकापूजनम्

**आग्नेय्यां प्रतिमास्वक्षत-पुञ्जेषु वा प्राक्संस्थमुदक्संस्थं वा पीठोपरि मातृकास्थापनं कुर्यात् । तद्यथा-**

---

खड़े हुए) सपरिवार बायीं ओर पत्नी सहित यजमान के मस्तक पर 'ॐ द्यौः शान्तिरन्तरिक्षꣳ. शान्तिः०' से लेकर 'अमृताऽभिषेकोऽस्तु' तक के मन्त्रों को पढ़ते हुए जल छिड़कें ।

*इस प्रकार आचार्य पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत 'शिवदत्ती' हिन्दी टीका सहित दुर्गार्चनपद्धति में पुण्याहवाचन समाप्त ।*

●

मातृकास्थापन - अग्निकोण में एक पीढ़े पर पश्चिम से पूर्व या दक्षिण से उत्तर तक सोलह जगह अक्षत की ढेरी पर गणेश से आरम्भ कर तुष्टि एवं कुल देवी पर्यन्त मातृका स्थापित कर पूजा करे ।

समीपे मातृवर्गस्य सर्वविघ्नहरं सदा।
त्रैलोक्यवन्दितं देवं गणेशं स्थापयाम्यहम्॥

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम। आहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम्॥

ॐ भूर्भुवः स्वः गणपतये नमः, गणपतिमावाहयामि स्थापयामि।

---

जो इस प्रकार है –

षोडश मातृका-चक्र

पूर्व

उत्तर / दक्षिण

| | | | |
|---|---|---|---|
| आ.कु.देवता १७ | लोकमाता १३ | देवसेना ९ | मेधा ५ |
| तुष्टि १६ | माता १२ | जया ८ | शची ४ |
| पुष्टि १५ | स्वाहा ११ | विजया ७ | पद्मा ३ |
| धृति १४ | स्वधा १० | सावित्री ६ | गणेश, गौरी १ २ |

पश्चिम

'समीपे मातृवर्गस्य०' से 'गणपतिमावाहयामि स्थापयामि' तक पढ़कर प्रथम अक्षत-पुंज (चावल की ढेरी) पर गणेश के लिए अक्षत छोड़े।

हेमाद्रितनयां देवीं वरदां शङ्करप्रियाम् ।
लम्बोदरस्य जननीं गौरीमावाहयाम्यहम् ।।

ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥

ॐ भूर्भुवः स्वः गौर्यै नमः, गौरीमावाहयामि स्थापयामि ।

पद्माभां पद्मवदनां पद्मनाभोरुसंस्थिताम् ।
जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहम् ।।

ॐ हिरण्यरूपा ऽउषसो विरोक ऽउभाविन्द्रा ऽउदिथः सूर्य्यश्श्च । आरोहतं वरुण मित्र गर्त्तं ततश्चक्षाथामदितिं दितिं च मित्रोऽसि वरुणोऽसि ॥

ॐ पद्मायै नमः, पद्मामावाहयामि स्थापयामि ।

दिव्यरूपां विशालाक्षीं शुचि-कुण्डल-धारिणीम् ।
रक्तमुक्ताद्यलङ्कारां शचीमावाहयाम्यहम् ।।

ॐ निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः । देव ऽइव सविता सत्यधर्म्मेन्द्रो न तस्थौ समरे पथीनाम् ॥

'हेमाद्रितनयां देवीं' से लेकर 'गौरीमावाहयामि स्थापयामि' तक पढ़कर द्वितीय अक्षत-पुंज पर गौरी के लिए अक्षत छिड़के ।

'पद्माभां पद्मवदनां०' से आरम्भ कर 'पद्मामावाहयामि स्थापयामि' पर्यन्त पढ़कर तीसरे अक्षत की ढेरी पर पद्मा के निमित्त अक्षत छोड़े ।

**ॐ शच्यै नमः, शचीमावाहयामि स्थापयामि ।**

**विश्वेऽस्मिन् भूरिवरदां जरां निर्जरसेविताम् ।**
**बुद्धिप्रबोधिनीं सौम्यां मेधामावाहयाम्यहम् ।।**

**ॐ मेधां मे व्वरुणो ददातु मेधामग्निः प्प्रजापतिः । मेधामिन्द्रश्श्च व्वायुश्श्च मेधांधाता ददातु मे स्वाहा ।**

**ॐ मेधायै नमः, मेधामावाहयामि स्थापयामि ।**

**जगत्सृष्टिकरीं धात्रीं देवीं प्रणवमातृकाम् ।**
**वेदगर्भां यज्ञमयीं सावित्रीं स्थापयाम्यहम् ।।**

**ॐ सविता त्त्वा सवानाᳫं सुवतामग्निर्गृहपतीनाᳫं सोमो व्वनस्प्पतीनाम् । बृहस्प्पतिर्व्वाचऽइन्द्रो ज्ज्यैष्ठ्याय रुद्रः पशुब्भ्यो मित्त्रः सत्त्यो व्वरुणो धर्म्मपतीनाम् ॥**

**ॐ सावित्र्यै नमः, सावित्रीमावाहयामि स्थापयामि ।**

**सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषिताम् ।**
**सर्वदेवस्तुतां वन्द्यां विजयां स्थापयाम्यहम् ।।**

---

'दिव्यरूपां विशालाक्षीं' से 'शचीमावाहयामि स्थापयामि' तक कहकर चतुर्थ अक्षत-पुंज पर शची का आवाहन करे ।

'विश्वेऽस्मिन् भूरिवरदां०' से 'मेधामावाहयामि स्थापयामि' तक पढ़कर पाँचवे अक्षत-पुंज पर मेधा की स्थापना के लिए अक्षत छोड़े ।

'जगत्सृष्टिकरीं धात्रीं' से 'सावित्रीमावाहयामि स्थापयामि' तक पढ़कर छठे अक्षत-पुंज पर सावित्री के लिए अक्षत छोड़े ।

ॐ विज्ज्यन्धनुः कपर्दिनो व्विशल्यो बाणवाँ२ ।। उत । अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ।।

ॐ विजयायै नमः, विजयामावाहयामि स्थापयामि ।

सुरारिमथिनीं देवीं देवानामभयप्रदाम् ।
त्रैलोक्यवन्दितां शुभ्रां जयामावाहयाम्यहम् ।।

ॐ बह्वीनां पिता बहुरस्य पुत्रश्शिश्चाकृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्व्वाः पृष्ठे निनद्धो जयति प्प्रसूतः ।।

ॐ जयायै नमः, जयामावाहयामि स्थापयामि ।

मयूरवाहनां देवीं खड्ग-शक्ति-धनुर्धराम् ।
आवाहयेद् देवसेनां तारकासुरमर्दिनीम् ।।

ॐ इन्द्र ऽआसान्नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुर ऽएतु सोमः। देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्ग्रम् ।।

ॐ देवसेनायै नमः, देवसेनामावाहयामि स्थापयामि।

---

पुनः 'सर्वास्त्रधारिणीं देवीं०' से 'विजयामावाहयामि स्थापयामि' तक पढ़कर सातवें अक्षत-पुंज पर विजया के लिए अक्षत छोड़े ।

'सुरारिमथिनीं देवीं०' से 'जयामावाहयामि स्थापयामि' तक पढ़कर आठवें पुंज पर जया के स्थापनार्थ अक्षत छोड़े ।

'मयूरवाहनां देवीं०' से प्रारम्भ कर 'देवसेनामावाहयामि स्थापयामि' पर्यन्त पढ़कर नवें अक्षत-पुंज पर देवसेना के आवाहनार्थ अक्षत छोड़े ।

अग्रजा सर्वदेवानां कव्यार्थं या प्रतिष्ठिता ।
पितॄणां तृप्तिदां देवीं स्वधामावाहयाम्यहम् ।।

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् ॥

ॐ स्वधायै नमः, स्वधामावाहयामि स्थापयामि ।
हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति ।
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ।।

ॐ स्वाहा प्राणेभ्यः साधिपतिकेभ्यः। पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा । दिवे स्वाहा सूर्याय स्वाहा ॥

ॐ स्वाहायै नमः, स्वाहामावाहयामि स्थापयामि ।
आवाहयाम्यहं मातॄः सकलाः लोकपूजिताः ।
सर्वकल्याणरूपिण्यो वरदा दिव्यभूषणाः ।।

ॐ आपो ऽअस्मान्मातरः शुन्धयन्तु घृतेन नो

---

'अग्रजा सर्वदेवानां०' से 'स्वधामावाहयामि स्थापयामि' तक पढ़कर दसवें पुंज पर स्वधा के निमित्त अक्षत छीटें ।

'हविर्गृहीत्वा सततं०' से 'स्वाहामावाहयामि स्थापयामि' तक कहकर ग्यारहवें पुंज पर स्वाहा के लिए अक्षत छोड़ें ।

घृतप्प्वः पुनन्तु। व्विश्श्वᳬ हि रिप्प्रं प्रवहन्ति देवी-रुदिदाब्भ्यᳬ शुचिरा पूत ऽएमि । दीक्षातपसोस्तनू-रसि तां त्वा शिवाᳬशग्ग्मां परिदधे भद्रं व्वर्ण्णं पुष्ष्यन् ॥

ॐ मातृभ्यो नमः, मातृः आवाहयामि स्थापयामि ।
आवाहयेल्लोकमातृर्जयन्तीप्रमुखाः शुभाः ।
नानाऽभीष्टप्रदाः शान्ताः सर्वलोकहितावहाः ।।

ॐ रयिश्श्च मे रायश्श्च मे पुष्ट्टञ्च मे पुष्ट्टिश्श्च मे व्विभु च मे प्प्रभु च मे पूर्ण्णञ्च मे पूर्ण्णतरञ्च मे कुयवञ्च मेऽक्षितञ्च मेऽन्नञ्च मेऽक्षुच्च मे यज्ञेन कल्प्पन्ताम् ॥

ॐ लोकमातृभ्यो नमः, लोकमातृः आवाहयामि स्थापयामि ।

सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम् ।
हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ।।

ॐ यत्प्रज्ञानमुत चेतो धृतिश्श्च यज्ज्योति-

'आवाहयाम्यहं मातृः' से लेकर 'मातृः आवाहयामि स्थापयामि' तक पढ़कर द्वादश अक्षत-समूह पर मातृ की स्थापना के लिए अक्षत छोड़ें।

तथा 'आवाहयेल्लोकमातृ०' से 'लोकमातृः आवाहयामि स्थापयामि' तक पढ़कर तेरहवें अक्षत-पुंज पर लोकमाता का आवाहन करें।

रन्तरमृतं प्प्रजासु । यस्मान्न ऽऋृते किञ्चन कर्म्म क्क्रियते तन्मे मनः शिवसङ्क्कल्प्पमस्तु ॥

ॐ धृत्यै नमः, धृतिमावाहयामि स्थापयामि ।

पोषयन्तीं जगत्सर्वं स्वदेहप्रभवैर्नवैः ।
शाकैः फलैर्जलैरत्नैः पुष्टिमावाहयाम्यहम् ॥

ॐ अङ्गान्न्यात्क्मन्त्रिभिषजा तदश्श्विनात्क्मानमङ्गैः समधात्त्सरस्वती । इन्द्रस्य रूपꣳ शतमानमायुश्श्चन्द्रेण ज्ज्योतिरमृतन्दधानाः ॥

ॐ पुष्ट्यै नमः, पुष्टिमावाहयामि स्थापयामि ।

देवैराराधितां देवीं सदा सन्तोषकारिणीम् ।
प्रसादसुमुखीं देवीं तुष्टिमावाहयाम्यहम् ॥

ॐजातवेदसे सुनवामसोममरातीयतो निर्दहातिवेदः। सनः पर्षदति दुर्गाणि विश्श्वा नावेवसिन्धुं दुरितात्यग्निः॥

ॐ तुष्ट्यै नमः, तुष्टिमावाहयामि स्थापयामि ।

पत्तने नगरे ग्रामे विपिने पर्वते गृहे ।
नानाजातिकुलेशानीं दुर्गामावाहयाम्यहम् ॥

---

'सर्वहर्षकरीं देवीं०' से 'धृतिमावाहयामि स्थापयामि' तक पढ़कर चौदहवें अक्षत-समूह पर धृति के लिए अक्षत छोड़ें।

'पोषयन्तीं जगत्सर्वं०' से 'पुष्टिमावाहयामि स्थापयामि' पर्यन्त पढ़कर पन्द्रहवें अक्षत-पुंज पर पुष्टि देवी के लिए अक्षत छोड़ें ।

'देवैराराधितां देवीं' से 'तुष्टिमावाहयामि स्थापयामि' तक पढ़कर सोलहवें पुंज पर तुष्टि के निमित्त अक्षत छोड़ें ।

ॐ प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा ।
चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥

ॐ आत्मनः कुलदेवतायै नमः, आत्मनः कुलदेवतामावाहयामि स्थापयामि ।

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमं तनोत्वरिष्टं य्यज्ञꣳ समिमन्दधातु । व्विश्श्वे देवास ऽइह मादयन्तामोँ३ प्रतिष्ठ ॥

गौर्याद्याः कुलदेवतान्तमातरो गणपतिसहिताः सुप्रतिष्ठिताः वरदाः भवन्तु ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिः आत्मनः कुलदेवताः ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

ॐ गणपत्यादि-कुलदेवतान्त-मातृभ्यो नमः। इति पठित्वा, षोडशोपचारैः सम्पूज्य, प्रार्थयेत्-

---

और 'पत्तने नगरे ग्रामे०' से लेकर 'आत्मनः कुलदेवतामावाहयामि स्थापयामि' पर्यन्त श्लोक-वाक्य पढ़कर सत्रहवें अक्षत-समूह पर अपनी कुलदेवी के लिए अक्षत छोड़ें ।

इसके बाद 'ॐ मनो जूतिर्जुषतामाज्यस्य०' से आरम्भ कर 'सुप्रतिष्ठिताः वरदाः भवन्तु' तक पढ़कर सभी मातृकाओं की प्राणप्रतिष्ठा कर, 'गौरी पद्मा शची मेधा०' से 'कुलदेवतान्तमातृभ्यो नमः' तक पढ़कर षोडशोपचार से पूजन करे। तत्पश्चात्

आयुरारोग्यमैश्वर्यं ददध्वं मातरो मम ।
निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः ।।

# वसोर्धारापूजनम्

आग्नेय्यां भितौ कुङ्कुमादिना बिन्दुकरणेनाऽलङ्करणं कृत्वाऽऽगामिमन्त्रं पठन्, घृतेन सप्तधाराः प्राक्संस्था उदक्संस्था वा कुर्यात् ।

ॐ व्वसोः पवित्रमसि शतधारं व्वसोः

---

'आयुरारोग्यमैश्वर्य०' यह श्लोक पढ़कर प्रार्थना करे ।

**वसोर्धारापूजन -**

अग्निकोण में दिवाल या पीढ़े पर कुङ्कुम (रोली) से क्रमशः ऊपर से नीचे तक एक, दो, तीन, चार, पाँच, छह और सात बिन्दुओं को बनाकर अर्थात् ऊपर एक बिन्दु, उसके नीचे दो बिन्दु, पुनः उसके नीचे तीन बिन्दु, इसी प्रकार क्रमशः सात बिन्दु तक निर्माण कर, उन बिन्दुओं के ऊपर भाग में 'श्रीः' लिखे । स्पष्टार्थ के लिए चक्र देखें ।

सप्तघृत-मातृका-चक्र




पुनः उसके नीचे की सात बिन्दुओं में 'ॐ वसोः पवित्रमसि

पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा ॥

इति मन्त्रेण वसोर्धाराः कर्तव्याः । 'कामधुक्षः' इत्येतावता मन्त्रेण (धारामर्धभागेन) गुडेनैकीकरणम् । प्रतिधारामेकैकदेवतामावाहयेत् ।

ॐ मनसः काममाकूतिं वाचः सत्यमशीय । पशूनाᳬं रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥

ॐ श्रियै नमः, श्रियमावाहयामि स्थापयामि ।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकम्म इषाण ॥

ॐ लक्ष्म्यै नमः, लक्ष्मीमावाहयामि स्थापयामि ।

ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाᳬं संस्तनूभि-

---

शतधारं०' से 'सुप्वा' पर्यन्त पढ़कर घृतधारा कर, 'कामधुक्षः' पढ़कर गुड़ के चूरे से सातों घृत-धाराओं को एक में मिला दें।

तत्पश्चात् उन सातों धाराओं में क्रम से एक-एक मन्त्र पढ़ते हुए प्रत्येक पर अक्षत छोड़कर एक-एक देवताओं का आवाहन करें । यथा –

'ॐ **मनसः काममाकूतिं०**' मन्त्र से 'ॐश्रियै नमः, श्रियमावाहयामि **स्थापयामि**' पढ़कर पहली धारा पर अक्षत छोड़कर श्री का, 'ॐ **श्रीश्च ते०**' से 'ॐ लक्ष्म्यै नमः, लक्ष्मीमावाहयामि

व्व्यशेमहि देवहितं य्यदायुः ॥

ॐ धृत्यै नमः, धृतिमावाहयामि स्थापयामि ।

ॐ मेधां मे व्वरुणो ददातु मेधामग्निः प्प्रजापतिः। मेधामिन्द्रश्च व्वायुश्च मेधां धाता ददातु मे स्वाहा ॥

ॐ मेधायै नमः, मेधामावाहयामि स्थापयामि ।

ॐ प्राणाय स्वाहा ऽअपानाय स्वाहा व्यानाय स्वाहा। चक्षुषे स्वाहा श्रोत्राय स्वाहा व्वाचे स्वाहा मनसे स्वाहा ॥

ॐ स्वाहायै नमः, स्वाहामावाहयामि स्थापयामि ।

ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्प्रयन्त्स्वः ॥

ॐ प्रज्ञायै नमः, प्रज्ञामावाहयामि स्थापयामि ।

ॐ पावका नः सरस्वती व्वाजेभिर्व्वाजिनीवती । य्यज्ञं व्वष्टु धियावसुः ॥

---

स्थापयामि' से लक्ष्मी का, ॐभद्रंकर्णेभिः शृणुयाम०' से 'ॐ धृत्यै नमः, धृतिमावाहयामि स्थापयामि' से धृति का, 'ॐमेधां मे वरुणो०' से 'ॐमेधायै नमः, मेधामावाहयामि स्थापयामि' तक पढ़कर मेधा का, 'ॐ प्राणाय स्वाहा, अपानाय स्वाहा०' मन्त्र से 'ॐ स्वाहायै नमः, स्वाहामावाहयामि स्थापयामि' तक कहकर स्वाहा का, 'ॐ आयं गौः' से 'ॐ प्रज्ञायै नमः, प्रज्ञामावाहयामि स्थापयामि'

ॐ सरस्वत्यै नमः, सरस्वतीमावाहयामि स्थापयामि।
ॐ श्रीर्लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती ।
माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ।।
इति मन्त्रेण वा ।
'ॐ वसोर्धारादेवताभ्यो नमः' इत्यावाह्य,
ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमं तनोत्वरिष्टं य्यज्ञꣳ समिमं दधातु । विश्वे देवा स ऽइह मादयन्तामोँ ३ प्रतिष्ठ ॥
इति वसोर्धारादेवताः सुप्रतिष्ठिताः वरदाः भवन्तु । सम्पूज्य, प्रार्थयेत् ।
यदङ्गत्वेन भो देव्यः ! पूजिता विधिमार्गतः ।
कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतुद्भवम् ।।
अनया पूजया वसोर्धारादेवताः प्रीयन्ताम् ।

*इति दुर्गार्चनपद्धतौ वसोर्धाराप्रकरणम् ।*

---

पर्यन्त पढ़कर प्रज्ञा का, 'ॐ पावका नः सरस्वती०' से 'ॐ सरस्वत्यै नमः, सरस्वतीमावाहयामि स्थापयामि' तक पढ़कर सरस्वती का आवाहन करें।

पुनः 'ॐ श्रीर्लक्ष्मीर्धृतिर्मेधा०' इस मन्त्र से अथवा 'ॐ वसोर्धारा देवताभ्यो नमः, पढ़कर आवाहन तथा 'ॐ मनो जूतिर्जुषतामाज्यस्य०' से 'वरदाः भवन्तु' तक पढ़कर, प्राणप्रतिष्ठा एवं विधिपूर्वक पूजन करना चाहिए। पश्चात् 'यदङ्गत्वेन भो देव्यः' से 'निर्विघ्नेन क्रतुद्भवम्' पर्यन्त पढ़कर प्रार्थना करें।

'अनया पूजया०' से 'प्रीयन्ताम्' तक वाक्य पढ़कर जल छोड़ें।

*इस प्रकार वसोर्धारा पूजन समाप्त ।*

# आयुष्यमन्त्रजपः

यदायुष्यं चिरं देवाः सप्तकल्पान्तजीविषु ।
ददुस्तेनायुषा युक्ता जीवेम शरदः शतम् ।।
दीर्घा नागा नगा नद्योऽनन्ताः सप्तार्णवा दिशः ।
अनन्तेनायुषा तेन जीवेम शरदः शतम् ।।
सत्यानि पञ्चभूतानि विनाशरहितानि च ।
अविनाश्यायुषा तद्वज्जीवेम शरदः शतम् ।।

ॐ आयुष्यं व्वर्च्चस्यꣳ रायस्पोषमौद्भिदम् । इदꣳ हिरण्यं व्वर्च्चस्व ज्जैत्रायाविशता दुमाम् ॥

ॐ न तद्रक्षाᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳह्येतत्। यो बिभर्त्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुꣳ स मनुष्येषु कृणुते दीर्घमायुः ॥

ॐ यदाबध्नन् दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः । तन्म ऽआबध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासम् ॥

*इति दुर्गार्चनपद्धतौ आयुष्यमन्त्रजपः ।*

---

**आयुष्यमन्त्रजप -**

इसके बाद 'यदायुष्यं चिरं देवाः०' श्लोक से लेकर 'जरदष्टिर्यथासम्' मन्त्र तक आयुष्य मन्त्र का पाठ करें ।

*इस प्रकार आयुष्य मन्त्र जप समाप्त ।*

# नान्दीश्राद्धम्

तत्पश्चात् साङ्कल्पिकेन विधिना [1]नान्दीश्राद्धं कुर्यात् । तद्यथा-पत्रावलिमध्ये प्रादक्षिण्येन चतुर्षु स्थानेषु ऋजून् कुशानास्तीर्य तदुपरि सङ्कल्पपूर्वकं पूजनं कुर्यात् । इदं श्राद्धं [2]सव्येन एव कुर्यात् ।

पादप्रक्षालनम्

**ॐ सत्यवसुसंज्ञका: विश्वेदेवा: नान्दीमुखा: ॐ**

---

**नान्दीश्राद्धप्रयोग -**

तत्पश्चात् सांकल्पिक विधि से नान्दीश्राद्ध करे, जो इस प्रकार है-

पूर्व दिशा की ओर विश्वेदेव के आसन-स्थान पर उत्तराग्र कुशा रखे और तीन आसन दक्षिण से पूर्वाग्र क्रम से- मातृ, पितामही और प्रपितामही के निमित्त प्रथम आसन तथा पितृ, पितामह एवं प्रपितामह के लिए द्वितीय आसन और सपत्नीक मातामह, प्रमातामह और वृद्ध-प्रमातामह के लिए तीसरा आसन रखने का विधान है। ये आसन कुछ दूरी पर हों, अर्थात् एक में सटे न हों । उन रखे आसनों पर विश्वेदेव के सहित अपने पूर्वज-पितरों की पूजा करे । जिसका क्रम इस प्रकार है -

पत्तल पर पूर्व से दक्षिण क्रम से सीधे चार कुशाओं को रखकर, उस पर संकल्पपूर्वक पूजन करे। यह श्राद्ध सव्य से ही करे।

---

१. भविष्यपुराणे -

पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ! ।
वृद्धिश्राद्धं महाबाहो ! कुलधर्मानवेक्ष्य हि ॥

२. अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् ।
अनाम्नामतिलाद्यैश्च नान्दीश्राद्धं च सव्यवत् ॥

**भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः।**

आसनदानम्

**ॐसत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः । ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः**

---

पादप्रक्षालन - दाहिने हाथ में जल लेकर 'सत्यवसुसंज्ञकाः०' से 'पादप्रक्षालनं वृद्धिः' तक वाक्य पढ़कर विश्वेदेव के पादप्रक्षालन के लिए, उनके आसन पर जल गिरा दे । इसी प्रकार दक्षिण क्रम से 'ॐ मातृ-पितामही-प्रपितामह्यः०' से लेकर 'ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः-पादप्रक्षालनं वृद्धिः' पर्यन्त पढ़कर मातृ, पितामही और प्रपितामही, पितृ, पितामह तथा प्रपितामह एवं सपत्नीक मातामह, प्रमातामह और वृद्धप्रमातामह को पादप्रक्षालनार्थ जल देवे।

आसनदान - तदनन्तर 'ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः०' से आरम्भ कर 'तथा प्राप्नुवामः' तक पढ़कर विश्वेदेव के लिए

इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां तथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां तथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः । ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इमे आसने वो नमो नमः, नान्दीश्राद्धेक्षणौ क्रियेतां तथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ।

गन्धादिदानम्

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः।

---

कुशरूप आसन दे और 'मातृ-पितामही-प्रपितामह्यः०' से 'भवन्तः तथा प्राप्नुवामः' तक पढ़कर मातृ-पितामही-प्रपितामही से सपत्नीक मातामह-प्रमातामह एवं वृद्धप्रमातामह के लिए आसन दे ।

गन्धादिदान - पुनः 'ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः' से लेकर ॐ मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ

भोजननिष्क्रयदानम्

**ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म-ब्राह्मणभोजन-पर्याप्ता-ऽऽमान्न[१]-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ मातृ-पितामही-प्रपितामह्यः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म-ब्राह्मण-भोजन-पर्याप्ता-ऽऽमान्न-निष्क्रयभूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ पितृ-पितामह-प्रपितामहाः नान्दीमुखाः ॐ भूर्भुवः स्वः इदं युग्म-ब्राह्मण-भोजन-पर्याप्ता-ऽऽमान्न-निष्क्रय-भूतं द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। ॐ मातामह-प्रमातामह - वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ**

---

भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः' तक पढ़कर विश्वेदेव से लेकर सपत्नीक मातामह-प्रमातामह-वृद्धप्रमातामह तक के लिए जल, वस्त्र, यज्ञोपवीत, चन्दन (रोली), अक्षत, पुष्प, धूप, दीप, नैवेद्य (पेड़ा, बतासा आदि), ऋतुफल, पान, सुपारी आदि से पूजन करे ।

भोजन-निष्क्रय-दान - इसके बाद 'ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः' से लेकर 'द्रव्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः' तक प्रत्येक वाक्य पढ़कर क्रमशः विश्वेदेव सहित सपत्नीक मातामह-प्रमातामह और वृद्धप्रमातामह को भोजन-निष्क्रय निमित्त दक्षिणा दे ।

---

१. 'नान्दीश्राद्धे अन्नाभावे आमम्, आमाभावे हिरण्यम्, हिरण्याभावे युग्म-ब्राह्मणभोजनपर्याप्ता-ऽमान्न-निष्क्रयीभूत-यथाशक्ति किञ्चिद् द्रव्यदानं दद्यादि'ति धर्मसिन्धौ ।

भूर्भुवः स्वः इदं युग्म-ब्राह्मण-भोजन-पर्याप्ता-ऽऽमान्न-निष्क्रयभूतं द्रव्यममृत-रूपेण स्वाहा सम्पद्यतां वृद्धिः।

स-क्षीरयवमुदकदानम्

ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः प्रीयन्ताम्। मातृ-पितामही-प्रपितामह्यः नान्दीमुख्यः प्रीयन्ताम्। पितृ-पितामह-प्रपितामहाः नान्दीमुखाः प्रीयन्ताम्। मातामह-प्रमातामह-वृद्धप्रमातामहाः सपत्नीकाः नान्दीमुखाः प्रीयन्ताम्।

जला-ऽक्षत-पुष्पप्रदानम्

चतुर्थ-स्थानेषु–शिवा आपः सन्तु, इति जलम्। सौमनस्यमस्तु, इतिपुष्पम्। अक्षतं चाऽरिष्टं चाऽस्तु, इत्यक्षतान्।

जलधारादानम्

ॐ अघोराः पितरः सन्तु। इति पूर्वाग्रां जलधारां दद्यात्। इति सदाचारः।

---

दूध-सहित यवादि का दान - पुनः दूध, यव, जल एक में मिलाकर दाहिने हाथ में लेकर, 'ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः०' से आरम्भ कर 'सपत्नी नान्दीमुखाः प्रीयन्ताम्' पर्यन्त वाक्य पढ़कर क्रम से विश्वेदेव पूर्वक सपत्नीक मातामह-प्रमातामह एवं वृद्धप्रमातामह के लिए पृथक्-पृथक् दे।

जल-पुष्प-अक्षत प्रदान - फिर 'शिवा आपः सन्तु' से जल, 'सौमनस्यमस्तु' से पुष्प, 'अक्षतं चाऽरिष्टं चाऽस्तु' से अक्षत विश्वेदेव से सपत्नीक मातामह-प्रमातामह-वृद्धप्रमातामह को क्रमशः अलग-अलग चढ़ाये।

आशी:प्रार्थना

**ततो यजमानः कृताञ्जलिः प्रार्थयेत् -**

**ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्तु। अन्नं च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कञ्चन। एताः सत्या आशिषः सन्तु।**

**ब्राह्मणाः - सन्त्वेताः सत्या आशिष इति।**

ततो दक्षिणादानम्

**ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐभूर्भुवः स्वः कृतस्यनान्दीश्राद्धस्य फलप्रतिष्ठा-सिद्ध्यर्थं द्राक्षा-ऽऽमलक-यव-मूल-निष्क्रयिणीं दक्षिणां**

---

जलधारा - तदनन्तर 'अघोराः पितरः सन्तु' वाक्य पढ़कर समस्त पितरों के लिये अँगूठे की ओर से पूर्वाग्र जल की धारा दे। ऐसा शिष्टाचार है।

आशी:प्रार्थना - तत्पश्चात् यजमान विनम्रभाव से हाथ जोड़कर 'ॐ गोत्रन्नो वर्धतां०' से 'मा च याचिष्म कञ्चन' तथा 'एताः सत्या आशिषः सन्तु' तक पढ़कर अपने पूर्वजों से प्रार्थना करे।

ब्राह्मण कह दें - 'सन्त्वेताः सत्या आशिषः' (अर्थात् तुम्हारे कहे हुए वाक्य सत्य हों - यही आशीर्वाद है)।

दक्षिणादान - पुनः 'ॐ सत्यवसुसंज्ञकाः विश्वेदेवाः०' से 'यव-मूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे' तक पढ़कर मुनक्का, आँवला, यव और अदरख मूल आदि का एक-एक संकल्प वाक्य द्वारा

दातुमहमुत्सृजे। ॐ [१]मातृ-पितामही-प्रपितामह्यः नान्दी-मुख्यः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फल-प्रतिष्ठा-सिद्ध्यर्थं द्राक्षा-ऽऽमलक-यव-मूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे। ॐ मातामह-प्रमातामह-वृद्ध-प्रमातामहाः सपत्नीकाः नान्दीमुखाः ॐ भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठा-सिद्ध्यर्थं द्राक्षा-ऽऽमलक-यव-मूलनिष्क्रयिणीं दक्षिणां दातुमहमुत्सृजे।

ॐ उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ२॥ इयक्षते। ॐ इडामग्ने पुरुदꣳ सꣳ सनिङ्गोः शश्वत्तमꣳ हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्त्वस्मे॥

अनेन नान्दीश्राद्धं सम्पन्नम्, इति यजमानः।

ब्राह्मणाः - सुसम्पन्नम्।

विश्वेदेव पूर्वक मातृ-पितामही-प्रपितामही, पितृ-पितामह-प्रपितामह और सपत्नीक मातामह-प्रमातामह-वृद्धप्रमातामह के लिए प्रदान करे अथवा इन वस्तुओं के अभाव में निष्क्रयभूत दक्षिणा दे।

पश्चात् 'ॐ उपास्मै गायता नरः' से 'सुमतिर्भूत्वस्मे' इन दो मन्त्रों को पढ़कर यजमान कहे - 'अनेन नान्दीश्राद्धं सम्पन्नम्'। ब्राह्मण कहें- 'सुसम्पन्नम्।

१. माता पितामही चैव तथैव प्रपितामही।
पिता पितामहश्चैव तथैव प्रपितामहः॥
मातामहस्तत्पिता च प्रमातामहकादयः।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम्॥

विसर्जनम्

**ॐ व्वाजे वाजेऽवत व्वाजिनो नो धनेषु व्विप्प्रा ऽअमृता ऽऋतज्ञाः। अस्य मद्ध्वः पिबत मादयद्ध्वं तृप्प्ता यात पथिभिर्द्देवयानैः ॥**

**ॐ आ मा व्वाजस्य प्प्रसवो जगम्म्यादेमे द्यावापृथिवी व्विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो ऽअमृतत्वेन गम्म्यात् ॥**

**इति मन्त्रेण विसृज्य ।**

**विश्वेदेवाः प्रीयन्तामिति विसृज्य । यजमानः-मयाऽऽचरिते साङ्कल्पिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीगणेशप्रसादाच्च परिपूर्णोऽस्तु-इति वदेत् ।**

**'अस्तु परिपूर्णः' -इति ब्राह्मणाः वदेयुः ।**

*इति आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रि-विरचितायां*
*दुर्गार्चनपद्धतौ नान्दीश्राद्धं समाप्तम् ।*



---

फिर यजमान - 'ॐ वाजेवाजेऽवत०' से 'ऽअमृतत्वेन गम्यात्' तक दो मन्त्रों तथा 'विश्वेदेवाः प्रीयन्ताम्' से 'परिपूर्णोऽस्तु' तक वाक्य कहे। 'अस्तु परिपूर्णः' ऐसा ब्राह्मण कहें।

*इस प्रकार आचार्य पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत*
*दुर्गार्चनपद्धति में नान्दीश्राद्ध समाप्त ।*



# आचार्यादिवरणम्

आंचार्यवरणम्

**उदङ्मुखमाचार्यमुपवेश्य, गन्धादिभिः सम्पूज्य, ॐ अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकशर्माऽहम् अमुकगोत्रोत्पन्नममुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गत-वाजसनेयमाध्यन्दिनीयशाखाध्यायिनममुकशर्माणं ब्राह्मण-मस्मिन् दुर्गापूजनकर्मणि एभिर्वरणद्रव्यैः आचार्यत्वेन त्वामहं वृणे। इति यजमानः ।**

**वृतोऽस्मि, इति ब्राह्मणः।**

**यजमानः-आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।**
**तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ! ।।**

ब्रह्मवरणम्

**अस्मिन् दुर्गापूजनकर्मणि एभिर्वरणद्रव्यैरमुकगोत्र-ममुक-शर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे। इति यजमानः। 'वृतोऽस्मि' इति ब्राह्मणः ।**

---

आचार्यवरण - इसके बाद यजमान (कर्ता) आसन पर आचार्य को उत्तर मुँह बैठाकर चन्दन, अक्षत और पुष्प आदि से पूजा करे। तथा दाहिने हाथ में जल, अक्षत एवं देयद्रव्य को लेकर 'ॐ अमुकगोत्रोत्पन्नः०' से 'त्वामहं वृणे' तक संकल्प-वाक्य पढ़कर आचार्य के हाथ में दे दे।

ब्राह्मण - 'वृतोऽस्मि' ऐसा कहे ।

पुनः यजमान 'आचार्यस्तु यथा स्वर्गे' इस प्रार्थना-श्लोक को पढ़े ।

**यजमानः -**

**यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः ।**
**तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ! ।।**

ऋत्विक्वरणम्

**अस्मिन् दुर्गापूजनकर्मणि एभिर्वरणद्रव्यैरमुकगोत्र-ममुकशर्माणं ब्राह्मणं ऋत्विक्त्वेन त्वामहं वृणे। इति यजमानः। 'वृतोऽस्मि'- इति विप्रप्रतिवचनम् ।**

**यजमानः -**

**भगवन् सर्वधर्मज्ञ ! सर्वधर्मपरायण ! ।**
**वितते मम यज्ञेऽस्मिन्नृत्विक् त्वं मे मखे भव ।।**

**ॐ व्व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्श्रद्धामाप्नोति श्श्रद्धया सत्त्यमाप्प्यते ॥**

---

ब्रह्मावरण - पुनः यजमान हाथ में वरणद्रव्य लेकर 'अस्मिन् दुर्गापूजनकर्मणि०' से 'ब्रह्मत्वेन त्वामहं वृणे' तक पढ़कर ब्रह्मवरण के लिए ब्राह्मण के हाथ में दे दे ।

ब्रह्मा कहे - 'वृतोऽस्मि' (अर्थात् मुझे स्वीकार है) ।

पुनः यजमान - 'यथा चतुर्मुखो ब्रह्मा०' श्लोक पढकर ब्रह्मा की प्रार्थना करे ।

ऋत्विक्वरण - फिर यजमान ऋत्विक्वरण के निमित्त हाथ में जल, अक्षत और वरण-सामग्री लेकर 'अस्मिन् दुर्गापूजनकर्मणि०' से 'ऋत्विक्त्वेन त्वामहं वृणे' तक पढ़कर पाठ करने वाले प्रत्येक ब्राह्मणों के हाथ में दे दे ।

ततो यजमानः करसम्पुटं कृत्वा सर्वान् प्रार्थयेत् ।

प्रार्थना -

अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
ग्रहध्यानरताः नित्यं प्रसन्नमनसः सदा ।।
अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः ।
ममाऽपि नियमा ह्येते भवन्तु भवतामपि ।।
ऋत्विजश्च यथा पूर्वं शक्रादीनां मखेऽभवन् ।
यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः ।।
अस्मिन् कर्मणि ये विप्राः वृता गुरुमुखादयः ।
सावधानाः प्रकुर्वन्तु स्वं स्वं कर्म यथोदितम् ।।
अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ।।
यथाविहितं कर्म कुरु (एकतन्त्रपक्षे-कुरुत) ।
विप्रः-यथास्थानं करवाणि (करवामः) ।।

*इति दुर्गार्चनपद्धतौ आचार्यादिवरणम् ।*

●

---

ब्राह्मणगण - 'वृतोऽस्मि' इस प्रकार कहें । फिर यजमान - 'भगवन् सर्वधर्मज्ञ०' श्लोक तथा 'व्रतेन दीक्षामाप्नोति०' से 'सत्यमाप्यते' तक मन्त्र पढ़े ।

तदनन्तर यजमान पुनः दोनों हाथ जोड़कर 'अक्रोधनाः' से 'विधिपूर्वकम्' तथा 'यथाविहितं कर्म कुरु' तक कहे ।

तत्पश्चात् आचार्यादि वृणीत ब्राह्मणगण 'यथाज्ञानं करवाणि' (अर्थात् मैं अपने शास्त्रीय ज्ञानानुसार कार्य करूँगा) - इस प्रकार कहें ।

*इस प्रकार दुर्गार्चनपद्धति में आचार्यादिवरण समाप्त ।*

# दिग्-रक्षणम्

यजमानः (आचार्यो वा) आचम्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, अस्मिन् दुर्गापूजनकर्मणि दिग्-रक्षणं करिष्ये । यजमानः वामहस्ते पीतसर्षपान् गृहीत्वा, दिग्-रक्षणं कुर्यात् ।

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ।।
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन पूजाकर्म समारभे ।।
भूतानि राक्षसा वाऽपि येऽत्र तिष्ठन्ति केचन ।
ते सर्वेऽप्यपगच्छन्तु यावत्कर्म करोम्यहम् ।।
इति तिष्ठन् पूर्वादिदिक्षु विकिरेत् । उदकोपस्पर्शः ।

*इति दुर्गार्चनपद्धतौ दिग्-रक्षणं समाप्तम् ।*

●

---

दिग्-रक्षण - यजमान अथवा आचार्य आचमन और प्राणायाम कर दाहिने हाथ में जल, अक्षत लेकर 'देशकालौ संकीर्त्य०' से 'दिग्-रक्षणं करिष्ये' तक संकल्प पढ़कर भूमि पर जल छोड़े । तत्पश्चात् यजमान बाँयें हाथ में पीली सरसों लेकर पूर्वादि चारों दिशाओं में 'यदत्र संस्थितं०' से 'यावत्कर्म करोम्यहम्' तक श्लोक पढ़कर पीली सरसों छींटे ।

*इस प्रकार दिग्-रक्षण समाप्त ।*

●

# [1]सर्वतोभद्रमण्डलदेवतास्थापनं पूजनं च

ततः सर्वतोभद्रमण्डलं विरचय्य, तत्र देवतास्थापनं कुङ्कुमादिना पूजनं च कृत्वा, सर्वतोभद्रे कलशस्थापन-विधिना कलशं स्थापयित्वा, कलशोपरि, अग्न्युत्तारणपूर्वक प्रधानप्रतिमां संस्थाप्य, सर्वतोभद्रदेवतास्थापनं कुर्यात् ।

तद्यथा -

**ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद् विसीमतः सुरुचो वेन ऽआवः। स बुद्ध्न्या ऽउपमा अस्य**

---

सर्वतोभद्रपूजन - एक समकोण चौकी पर एक श्वेत नवीन चौकोर वस्त्र बिछावे, जो चौकी से बड़ा हो । उसको सुतरी से खूब मजबूत चारों पाये में बाँध दे। तत्पश्चात् उस चौकी पर सर्वतोभद्र का निर्माण करे और उसमें ब्रह्मादि देवों का तत्तन्मन्त्रों से आवाहन-स्थापन और कुंकुमादि से पूजन करे । पुनः उस सर्वतोभद्र पर कलश-स्थापन-विधि से कलशस्थापन कर, उस पर अग्न्युत्तारण पूर्वक प्रधान देवी की स्वर्णप्रतिमा स्थापित कर, सविधि उसकी पूजा करे । वह स्थापन, पूजन और अग्न्युत्तारण इस प्रकार है -

---

१. सर्वतोभद्रकारिका -

प्रागुदीच्यां गता रेखाः कुर्यादेकोनविंशतिः ।
खण्डेन्दुस्त्रिपदः श्वेतः पञ्चभिः कृष्णशृङ्खलाः ॥
नीलैकादश वल्ली तु भद्रं रक्तं पदैर्नव ।
चतुर्विंशत्सिता वापी परिधिः पीतविंशतिः ॥
मध्ये षोडशभिः कोष्ठैः रक्तं पद्मं सकर्णिकम् ।
परिध्यावेष्टितं पद्मं बाह्ये सत्त्वं रजस्तमः ॥
तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरेश्वरान् ॥

व्विष्ठ्ठाः सुतश्च्च योनिमसंतश्च्च व्विवः ॥

(मध्ये कर्णिकायाम्) ॐ भूर्भुवः स्वः ब्रह्मणे नमः, ब्रह्माणमावाहयामि स्थापयामि ।।१।।

ॐ व्वयꣳसोम व्व्रते तव मनस्तनूषु बिब्भ्रतः। प्रजावन्तः सचेमहि ॥

(उत्तरेवाप्याम्) ॐ भूर्भुवः स्वः सोमाय नमः, सोममावाहयामि स्थापयामि ।।२।।

ॐ तमीशानं जगतस्तस्थुषस्प्पतिं धियञ्जिन्न्व-मवसे हूमहे व्वयम् । पूषा नो यथा व्वेद सामसद्-वृधे रक्षिता पायुरदब्धः स्वस्तये ॥

(ईशान्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः ईशानाय नमः, ईशानमावाहयामि स्थापयामि ।।३।।

ॐ त्त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्क्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्त्विन्द्रः ।

---

सर्वतोभद्रमण्डलदेवता स्थापनक्रम

'ॐ ब्रह्मयज्ञानं०' से 'ब्रह्माणमावाहयामि स्थापयामि' तक पढ़कर सर्वतोभद्र के मध्यकर्णिका पर ब्रह्मा का, 'ॐ वयꣳ. सोम व्रते०' से 'सोममावाहयामि स्थापयामि' तक पढ़कर उत्तर दिशा की वापी में सोम का, 'ॐ तमीशानं जगतः०' से लेकर 'ईशानमावाहयामि स्थापयामि' तक कहकर ईशान कोण स्थित खण्डेन्दु पर ईशान, 'ॐ त्रातारमिन्द्रमवितारमिन्द्र०' से 'इन्द्र-

(पूर्वे वाप्याम्) ॐ भूर्भुवः स्वः इन्द्राय नमः, इन्द्रमावाहयामि स्थापयामि ।।४।।

ॐ त्वन्नो ऽअग्ग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्न्वश्च्च व्वन्द्य । त्त्राता तोकस्य तनये गवामस्य निमेषꣳ रक्षमाणस्तव व्व्रते ॥

(आग्नेय्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः अग्नये नमः, अग्निमावाहयामि स्थापयामि ।।५।।

ॐ यमाय त्त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्त्रे ॥

(दक्षिणे वाप्याम्) ॐ भूर्भुवः स्वः यमाय नमः, यममावाहयामि स्थापयामि ।।६।।

ॐ असुन्वन्तमयजमानमिच्च्छ स्तेनस्येत्त्यामन्विहि तस्करस्य । अन्न्यमस्म्मदिच्च्छ सा त ऽइत्त्या नमो देवि निर्ऋते तुब्भ्यमस्तु ॥

(नैर्ऋत्यां खण्डेन्दौ) ॐ भूर्भुवः स्वः निर्ऋतये नमः, निर्ऋतिमावाहयामि स्थापयामि ।।७।।

---

मावाहयामि स्थापयामि' तक पढ़कर पूर्व दिशा की वापी में इन्द्र का, 'ॐ त्वन्नो ऽअग्ने०' से 'अग्निमावाहयामि स्थापयामि' तक पढ़कर अग्निकोण के खण्डेन्दु में अग्नि का, 'ॐ यमाय त्वाङ्गिरस्वते०' से आरम्भ कर 'यममावाहयामि स्थापयामि' पर्यन्त उच्चारण कर दक्षिण वापी में यम का आवाहन एवं स्थापन करे।

इसी तरह - 'असुन्वन्तमयजमानमिच्छ०' से 'निर्ऋतिमावाहयामि

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ।।
ॐ यत्पुरुषं व्वयदधुः कतिधा व्व्यकल्प्पयन् ।
मुखङ्किमस्यासीत्किं बाहू किमूरू पादा उच्च्येते ॥
मन्दार-परिजातादि-पाटली-केतकानि च ।
जाती-चम्पक-पुष्पाणि गृहाणेमानि शोभने ! ।।
भगवत्यै श्रीदुर्गादेव्यै नमः, पुष्पाणि समर्पयामि ।

पुष्पमालाम्

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ।।
ॐ ओषधीः प्प्रतिमोदध्वं पुष्प्पवतीः प्रसूवरीः ।
अश्श्वा ऽइव सजित्त्वरीर्व्वीरुधः पारयिष्ण्णवः ॥
पद्म-शङ्ख-पुष्पादि शतपत्रैर्विचित्रताम् ।
पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि ! ।।
भगवत्यै श्रीदुर्गादेव्यै नमः, पुष्पमालां समर्पयामि ।

अङ्गपूजनम्

वामहस्ते पुष्पं गृहीत्वा दक्षिणेनार्चयेत् –

---

से 'सिन्दूरं समर्पयामि' पर्यन्त पढ़कर सिन्दूर, (अबीर-बुक्का) आदि सौभाग्य द्रव्य अर्पण करें।

'मनसः काममाकूतिं०' से 'पुष्पाणि समर्पयामि' तक कहकर सुगन्धित पुष्प एवं 'आपः सृजन्तु०' से 'पुष्पमालां समर्पयामि' पर्यन्त पढ़कर देवी को फूल का गजरा पहिनावे ।

ॐ दुर्गायै नमः, पादौ पूजयामि। ॐ महाकाल्यै नमः, गुल्फौ पूजयामि। ॐ मङ्गलायै नमः, जानुद्वयं पूजयामि। ॐ कात्यायन्यै नमः, ऊरुद्वयं पूजयामि। ॐ भद्रकाल्यै नमः, कटिं पूजयामि। ॐ कमलवासिन्यै नमः, नाभिं पूजयामि। ॐ शिवायै नमः, उदरं पूजयामि। ॐ क्षमायै नमः, हृदयं पूजयामि। ॐ कौमार्यै नमः, स्तनौ पूजयामि। ॐ उमायै नमः, हस्तौ पूजयामि। ॐ महागौर्यै नमः, दक्षिणबाहुं पूजयामि। ॐ वैष्णव्यै नमः, वामबाहुं पूजयामि। ॐ रमायै नमः, स्कन्धौ पूजयामि। ॐ स्कन्दमात्रे नमः, कण्ठं पूजयामि। ॐ महिषासुरमर्दिन्यै नमः, नेत्रे पूजयामि। ॐ सिंहवाहिन्यै नमः, मुखं पूजयामि। ॐ माहेश्वर्यै नमः, शिरः पूजयामि। ॐ कात्यायन्यै नमः, सर्वाङ्गं पूजयामि।

धूपम्

य: शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्॥

ॐ धूर॑सि॒ धूर्व्व॒ धूर्व्व॑न्तं॒ धूर्व्व॒तं ख्योऽस्मान् धूर्व्वी॑ति॒ तं धूर्व्व॒यं व्व॒यं धूर्व्वा॑मः। दे॒वाना॑मसि॒

---

अङ्गपूजन-दाहिने हाथ में पुष्प लेकर 'ॐ दुर्गायै नमः' से लेकर 'ॐ कात्यान्यै नमः' तक एक-एक नाम से पढ़ कर यन्त्रस्थित दुर्गा जी की मूर्ति पर चढ़ावें।

तत्पश्चात् 'यः शुचिः प्रयतो भूत्वा०' से 'धूपमाघ्रापयामि' तक

व्वर्ह्लितमꣳ सस्निंतमं पप्प्रितमं जुष्ट्टतमं देवहूतमम् ॥

दशाङ्ग-गुग्गुलं धूपं चन्दना-गरु-संयुतम् ।
समर्पितं मया भक्त्या महादेवि! प्रगृह्यताम् ॥
भगवत्यै श्रीदुर्गादेव्यै नमः, धूपमाघ्रापयामि ।

दीपम्

सरसिजनिलये सरोजहस्ते धवलतरांशुक-गन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवन-भूतिकरि प्रसीद मह्यम् ॥

ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा । ज्ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ॥

साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेशि! त्रैलोक्यतिमिरापहम् ॥
भगवत्यै श्रीदुर्गादेव्यै नमः, [1]दीपं दर्शयामि ।

नैवेद्यं फलं च

आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥

---

कहकर धूप, 'सरसिज-निलये०' से आरम्भ कर 'दीपं दर्शयामि' तक पढ़कर दीप दिखावे।

'आर्द्रां पुष्करिणीं०'-'नैवेद्यं फलं च निवेदयामि' तक पढ़कर नैवेद्य (भोग) चढ़ावे।

---

१. घृतदीपं सितवर्तियुतं देवतादक्षिणभागे। तैलदीपं रक्तवर्तियुतं देवतावामभागे स्थापनीयम्।

ॐ नाभ्यां ऽआसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ ऽअकल्प्यन् ॥

अन्नं चतुर्विधं स्वादु-रसैः षड्भिः समन्वितम् ।
नैवेद्यं गृह्यतां देवि ! भक्तिं मे ह्यचलां कुरु ।।

अथवा

द्राक्षा-खर्जूर-कदली-पनसा-ऽऽम्र-कपित्थकम् ।
नारिकेलेक्षु-जम्ब्वादि-फलानि प्रतिगृह्यताम् ।।

भगवत्यै श्रीदुर्गादेव्यै नमः, नैवेद्यं फलं च निवेदयामि ।

ॐ प्राणाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, ब्रह्मणे नमः, मध्ये पानीयम्, उत्तरापोषणं हस्तप्रक्षालनं मुखप्रक्षालम् । इति आचमनीयं जलं समर्पयामि ।

ॐ अꣳशुना ते अꣳशुः पृच्च्यतां परुषा परुः । गन्धस्ते सोममवतु मदाय रसो ऽअच्युतः ॥

भगवत्यै श्रीदुर्गादेव्यै नमः, करोद्वर्तनार्थे गन्धं समर्पयामि ।

---

पश्चात् 'ॐ प्राणाय स्वाहा०' से लेकर 'आचमनीयं जलं समर्पयामि' तक पढ़कर भूमि पर चार आचमनी जल गिरावे ।

पुनः 'ॐ अꣳ. शुना०' से लेकर 'गन्धं समर्पयामि' तक पढ़कर दोनों हाथों की अंगुष्ठयुक्त तर्जनी अँगुलि से गन्ध छिड़के ।

तां म ऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ।।
ॐ स॒प्तास्या॑सन्परि॒धय॒स्त्रिः स॒प्त स॒मिधः॑ कृ॒ताः ।
दे॒वा यद्य॒ज्ञं त॑न्वा॒ना ऽअब॑ध्न॒न्पुरु॑षं प॒शुम् ।।

एला-लवङ्ग-कस्तूरी-कर्पूरैः पुष्पवासिताम् ।
वीटिकां मुखवासार्थसमर्पयामि सुरेश्वरि ! ।।

अथवा

पूगीफलं महद्दिव्यं नागवल्ली-दलैर्युतम् ।
एलादि-चूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।।

भगवत्यै श्रीदुर्गादेव्यै नमः, मुखवासार्थे एलालवङ्गा-दिभिर्युतं पूगीफल-ताम्बूलं समर्पयामि ।

दक्षिणा

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ।।

ॐ हि॒र॒ण्य॒ग॒र्भः सम॑वर्त्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ ऽआसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ।।

---

पश्चात् 'तां म ऽआवह जातवेदो०' से 'पूगीफल-ताम्बूलं समर्पयामि' तक पढ़कर लौंग, इलायची, सुपाड़ी, छुट्टा पान अथवा पान का बीड़ा समर्पित करे ।

तदनन्तर 'यः शुचिः प्रयतो०' से 'द्रव्यदक्षिणां समर्पयामि' तक पढ़कर दक्षिणा चढ़ावे ।

पूजाफलसमृद्ध्यर्थं तवाग्रे स्वर्णमीश्वरि ! ।
स्थापितं तेन मे प्रीता पूर्णान् कुरु मनोरथान् ।।
अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य
त्रिभुवनकमनीये पूजयित्वा च वस्त्रैः ।
मिलित-विविधमुक्तैर्दिव्य-लावण्ययुक्तां
जननि ! कनकवृष्टिं दक्षिणां तेऽर्पयामि ।।
भगवत्यै श्रीदुर्गादेव्यै नमः, द्रव्यदक्षिणां समर्पयामि ।

राजोपचारान् (छत्रम्)

ॐ ध्रुवाऽसि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात्। घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य छदिरसि विश्वजनस्य छाया ।

छत्रं देवि ! जगद्धात्रि ! घर्म-वात-प्रनाशनम् ।
गृहाण हे महामाये ! सौभाग्यं सर्वदा कुरु ।।
भगवत्यै श्रीदुर्गादेव्यै नमः, छत्रं समर्पयामि ।

(चामरम्)

ॐअहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्बीव सोमः । वाजसनिꣳ रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥

चामरं हे महादेवि ! चमरीपुच्छनिर्मितम् ।
गृहीत्वा पापराशीनां खण्डनं सर्वदा कुरु ।।

---

तत्पश्चात् 'ॐ ध्रुवाऽसि ध्रुवोऽयं०' से लेकर 'छत्रं समर्पयामि' तक पढ़कर छत्र (छाता), 'ॐ अहाव्यग्ने हविरास्ये०' से 'चामरं

भगवत्यै श्रीदुर्गादेव्यै नमः, चामरं समर्पयामि ।

(दर्पणम्)

ॐ रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः ।
अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः ॥

दर्पणं विमलं रम्यं शुद्धबिम्बप्रदायकम् ।
आत्मबिम्बप्रदर्शार्थमर्पयामि महेश्वरि ! ।।

भगवत्यै श्रीदुर्गादेव्यै नमः, दर्पणं समर्पयामि ।

(तालवृन्तम्)

ॐ इडामग्ने पुरुदꣳसꣳसनिं गोः शश्वत्तमꣳ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥

रौप्येण दण्डेन युतेन शब्दैर्युक्तेन वै रौप्यसुकिङ्किणीनाम् ।
सुतालवृत्तेन तवाङ्गकानि मातः ! सुमन्दं परिवीजयामि ।।

अथवा

वर्हिर्बर्हकृताकारं मध्यदण्डसमन्वितम् ।
गृह्यतां व्यजनं दुर्गे देहस्वेदापनुत्तये ।।

श्रीदुर्गादेव्यै नमः, तालवृन्तं समर्पयामि ।

---

समर्पयामि' तक कहकर चवँर, 'ॐ रजता हरिणीः सीसा०' से 'दर्पणं समर्पयामि' तक उच्चारण कर शीशा, 'ॐ इडामग्ने पुरुदꣳ.' से आरम्भ कर 'तालवृन्तं समर्पयामि' तक पढ़कर देवी को पंखा समर्पित करे ।

आर्तिक्यम्

ॐ इदꣳ हविः प्प्रजननं मे ऽअस्तु दशवीरꣳ सर्व्वगणꣳ स्वस्तये । आत्मसनि प्प्रजासनि पशुसनि लोकसन्न्यभयसनि । अग्निः प्प्रजां बहुलां मे करोत्वन्नं पयो रेतो ऽअस्म्मासु धत्त । आ रात्रि पार्थिवꣳ रजः पितुरप्प्रायि धामभिः । दिवः सदाꣳसि बृहती वि तिष्ठस ऽआ त्वेषं वर्त्तते तमः ॥

चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ।।
भगवत्यै श्रीदुर्गादेव्यै नमः, आर्तिक्यं समर्पयामि ।

मन्त्र-पुष्पाञ्जलिः

ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्प्रथमान्न्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः ॥

ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय महाराजाय नमः ।

ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं

---

तत्पश्चात् 'ॐ इदꣳ० हविः' से 'आर्तिक्यं समर्पयामि' तक पढ़कर दुर्गा देवी की कपूर से आरती करें।

इसके बाद हाथ में पुष्प लेकर 'ॐ यज्ञेन यज्ञमयजन्त०' से

पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायि स्यात् सार्वभौमः सार्वायुष आन्तादापरार्धात् । पृथिव्यै समुद्रपर्यन्ताया ऽएकराडिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्या ऽवसन् गृहे । आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासदः इति ।

ॐ व्विश्वतश्चक्षुरुत व्विश्वतोमुखो व्विश्वतो- बाहुरुत व्विश्वतस्पात् । सम्बाहुब्भ्यान्धमति सम्पत- त्रैर्द्यावाभूमी जनयन्देव ऽएकः ॥

कात्यायन्यै च विद्महे कन्यकुमारि च धीमहि ।
तन्नो दुर्गिः प्रचोदयात् ।।

सेवन्तिका-बकुल-चम्पक-पाटला-ऽब्जैः
पुन्नाग-जाति-करवीर-रसाल-पुष्पैः ।
विल्व-प्रवाल-तुलसीदल-मञ्जरीभिः
त्वां पूजयामि जगदीश्वरि ! मे प्रसीद ।।

पापोऽहं पापकर्माऽहं पापात्मा पापसम्भवः ।
त्राहि मां सर्वदा मातः ! सर्वपापहरा भव ।।

नानासुगन्धयुक्तं च यथाकालोद्भवं तथा ।
मया पुष्पाञ्जलिर्दत्ता गृहाण परमेश्वरि ! ।।

भगवत्यै श्रीदुर्गादेव्यै नमः, मन्त्रपुष्पाञ्जलिं समर्पयामि ।

---

आरम्भ कर 'मन्त्र-पुष्पाञ्जलिं समर्पयामि' पर्यन्त पढ़कर देवी पर चढ़ावे ।

प्रदक्षिणाम्

ॐ स॒प्ताास्यासन्परि॒धय॒स्त्रिः स॒प्त स॒मिधः॑ कृताः॑ ।
दे॒वा यद्य॒ज्ञं त॑न्वा॒ना ऽअब॑ध्न॒न्पुरु॑षं प॒शुम् ॥
पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥
यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि नश्यन्तु प्रदक्षिण पदे पदे ॥

भगवत्यै श्रीदुर्गादेव्यै नमः, प्रदक्षिणां समर्पयामि ।

प्रार्थना

एषा भक्त्या तव विरचिता या मया देवि! पूजा
स्वीकृत्यैनां सपदि सकलान् मेऽपराधान् क्षमस्व ।
नूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥
या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि! विश्वम् ॥

भगवत्यै श्रीदुर्गादेव्यै नमः, प्रार्थनापूर्वक-नमस्कारान् समर्पयामि ।

---

पुनः 'ॐ सप्तास्यासन्०' से 'प्रदक्षिणां समर्पयामि' तक पढ़कर प्रदक्षिणा (फेरी करे)।

पश्चात् 'एषा भक्त्या तव विरचिता०' से 'प्रार्थनापूर्वक-नमस्कारान् समर्पयामि' तक पढ़कर देवी को प्रार्थना-पूर्वक नमस्कार करे।

**अनया पूजया भगवती-श्रीदुर्गादेवी प्रीयताम् ।**

*इति-आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रि-कृतायां*
*दुर्गार्चनपद्धतौ षोडशोपचारदुर्गापूजनं समाप्तम् ।*

●

# आवरणपूजा

प्रथमावरणम्

**वामेन तत्त्वमुद्रया तर्पणम् । दक्षिणेन ज्ञानमुद्रया पूजनम् ।**

प्रार्थना

**संचिन्मयपरे देवि ! परामृतचरुप्रिये ! ।**
**अनुज्ञां देहि मे मातः ! परिवारार्चनाय ते ।।**

**यथा-दक्षिणेना-ऽक्षत-पुष्पादिना पूजयामीति सम्पूज्य, वामकरधृतार्द्रखण्डेन विशेषार्घजलैस्तर्पयाम्येवं सर्वत्र । ह्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहाकाली-महालक्ष्मी-महासरस्वत्यै नमः, श्रीमहाकाली-महालक्ष्मी-महासरस्वती-श्रीपादुकां पूजयामि तर्पयामि । ह्रीं ऐं ह्रीं**

---

तत्पश्चात् 'अनया पूजया भगवती-श्रीदुर्गादेवी प्रीयताम्' कहकर एक आचमनी पृथ्वी पर जल छोड़ दे ।

*इस प्रकार आचार्य पण्डित श्रीशिवदत्तमिश्रशास्त्रिकृत*
*'शिवदत्तीहिन्दी' टीका सहित दुर्गार्चनपद्धति में*
*षोडशोपचार दुर्गापूजन समाप्त ।*

●

## आवरणपूजा

प्रथमावरण-दाहिने हाथ में अक्षत, पुष्प लेकर, 'ह्रीं ऐं ह्रीं क्लीं

क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहाकाल्यै नमः, श्रीमहाकाली-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहालक्ष्म्यै नमः, श्रीमहालक्ष्मी-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहासरस्वत्यै नमः, श्रीमहासरस्वती-श्रीपादुकां पूजयामि तर्पयामि।

बिन्दोः परितो गुरुचतुष्टयं पूजयेत् –

ह्रीं गुरवे नमः, गुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं परमगुरवे नमः, परमगुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं परात्परगुरवे नमः, परात्परगुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं परमेष्ठिगुरवे नमः, परमेष्ठिगुरुशक्तिश्रीपादुकां पूजयामि तर्पयामि।

षडङ्गं पूजयेत्—ह्रीं ऐं हृदयाय नमः, हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं शिरसे नमः, शिरःशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्लीं शिखायै नमः, शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं चामुण्डायै कवचाय नमः, कवचशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं विच्चे नेत्रत्रयाय नमः, नेत्रशक्तिश्रीपादुकां पूजयामि तर्पयामि। मूलेन अस्त्राय नमः, अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि।

प्रथमावरणदेवताभ्यो नमः, सर्वोपचारार्थे गन्धं पुष्पं समर्पयामि ।

समान्यार्घजलमादाय—एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।१।।

पुष्पाञ्जलिं दत्वा । अनेन प्रथमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । [१]योनिमुद्रया प्रणमेत् ।

*इति प्रथमावरणम् ।*

---

चामुण्डायै विच्चे' से आरम्भ कर 'प्रथमावरणदेवताभ्यो नमः' तक पढ़कर यन्त्रस्थित दुर्गा की मूर्ति पर चढ़ावे ।

पुनः आचमनी में जल लेकर, 'एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' कह कर जल छोड़ जल दे ।

पुनः पुष्प लेकर 'अभीष्टसिद्धिं०' से 'प्रथमावरणार्चनम्' तक पढ़कर मूर्ति पर चढ़ा दे ।

पश्चात् एक आचमनी जल लेकर 'अनेन प्रथमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर जल छोड़ दे और योनिमुद्रा से प्रणाम करे ।

*इस प्रकार प्रथमावरण समाप्त ।*

---

१. मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्द्ध्व-संश्लिष्टे दीर्घमध्यमयोरथ ॥
अङ्गुष्ठाग्रद्वयं न्यसेद् योनिमुद्रेयमीरिता ॥ (मन्त्र म०, पू० ख०, प्र० त०)

द्वितीयावरणम्

त्रिकोणे स्वाग्रादिप्रादक्षिण्येन पूजयेत्—ह्रीं सावित्र्या सह विधात्रे नमः, विधातृशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं श्रिया सह विष्णवे नमः, विष्णुशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं उमया सह शिवाय नमः, शिवशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्ष्रुं सिंहाय नमः, सिंहशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं हुं महिषाय नमः, महिषशक्तिश्रीपादुकां पूजयामि तर्पयामि।

**द्वितीयावरणदेवताभ्यो नमः, गन्धं पुष्पं च समर्पयामि।**

**सामान्यार्घजलमादाय, एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु।**

**पुष्पाञ्जलिमादाय,**

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले!।**
**भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।२।।**

---

द्वितीयावरण- उपर्युक्त प्रकार से हाथ में अक्षत, पुष्प लेकर 'ह्रीं सावित्र्या सह विधात्रे नमः' से लेकर 'द्वितीयावरणदेवताभ्यो नमः' पर्यन्त पढ़कर यन्त्र पर चढ़ा दे।

पश्चात् आचमनी में जल लेकर, 'एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' पढ़कर जल छोड़ दे।

पुनः पुष्प लेकर 'अभिष्टसिद्धिं' से 'द्वितीयावरणार्चनम्' पर्यन्त पढ़कर मूर्ति पर चढ़ा दे। पुनः एक आचमनी जल लेकर

पुष्पाञ्जलिं दत्वा । अनेन द्वितीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

*इति द्वितीयावरणम् ।*

तृतीयावरणम्

षट्कोणेऽग्नीशासुरवायव्ये मध्ये दिक्षु च पूजयेत्— ह्रीं ऐं नन्दजायै नमः, नन्दजाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं रक्तदन्तिकायै नमः, रक्तदन्तिका-शक्ति-श्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्लीं शाकम्भर्यै नमः, शाकम्बरीशक्ति-श्रीपादुकां पूजयामि तर्पयामि । ह्रीं दुं दुर्गायै नमः, दुर्गाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं हुं भीमायै नमः, भीमाशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं भ्रामर्यै नमः, भ्रामरीशक्ति-श्रीपादुकां पूजयामि तर्पयामि । तृतीयावरण-देवताभ्यो नमः, गन्धं पुष्पं समर्पयामि ।

सामान्यार्घजलमादाय, एतास्तृतीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु ।

---

'अनेन द्वितीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर जल छोड़ दे, तथा योनिमुद्रा द्वारा प्रणाम करे ।

*इस प्रकार द्वितीयावरण समाप्त ।*

तृतीयावरण- हाथ में अक्षत, पुष्प लेकर 'ह्रीं ऐं नन्दजायै०' से लेकर 'तृतीयावरणदेवताभ्यो नमः' तक पढ़कर यन्त्र पर चढ़ावे । पुनः आचमनी में जल लेकर, 'एतास्तृतीयावरणदेवताः साङ्गाः

**पुष्पाञ्जलिमादाय,**

**अभीष्टसिद्धिं मे देहि शरणागतवत्सले ! ।**

**भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।। ३ ।।**

**पुष्पाञ्जलिं दत्वा । अनेन तृतीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।**

*इति तृतीयावरणम् ।*

चतुर्थावरणम्

**ततोऽष्टपत्रे स्वाग्रादिप्रादक्षिण्येन पूजयेत् –**

**ह्रीं ऐं ब्राह्म्यै नमः, ब्राह्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं माहेश्वर्यै नमः, माहेश्वरीशक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं क्लीं कौमार्यै नमः, कौमारी-शक्ति-श्रीपादुकां पूजयामि तर्पयामि । ह्रीं वैष्णव्यै नमः, वैष्णवी-शक्तिश्रीपादुकां पूजयामि तर्पयामि । ह्रीं लृं वाराह्यै नमः, वाराहीशक्तिश्रीपादुकां पूजयामि तर्पयामि ।**

---

सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' कहकर जल छोड़ दे। पुनः पुष्प लेकर 'अभिष्टसिद्धिं मे देहि०' से 'तृतीयावरणार्चनम्' तक पढ़कर मूर्ति पर अर्पित कर दे।

पश्चात् एक आचमनी जल लेकर 'अनेन तृतीयावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर जल छोड़ दे और योनिमुद्रा से प्रणाम करे।

*इस प्रकार तृतीयावरण समाप्त।*

चतुर्थावरण- हाथ में अक्षत और फूल लेकर 'ह्रीं ऐं ब्राह्म्यै नमः' से लेकर 'चतुर्थावरणदेवताभ्यो नमः, गन्धं पुष्पं समर्पयामि' पर्यन्त पढ़कर मूर्ति पर चढ़ावे।

ह्रीं क्ष्रौं नारसिंह्यै नमः, नारसिंहीशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं लं ऐन्द्र्यै नमः, ऐन्द्रीशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं स्त्र्यैं चामुण्डायै नमः, चामुण्डाशक्तिश्रीपादुकां पूजयामि तर्पयामि।

मध्ये-ह्रीं लक्ष्म्यै नमः, लक्ष्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि।

चतुर्थावरणदेवताभ्यो नमः, गन्धं पुष्पं समर्पयामि।

सामान्यार्घजलमादाय–एताश्चतुर्थावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्॥४॥

पुष्पाञ्जलिं दत्वा। अनेन चतुर्थावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्। योनिमुद्रया प्रणमेत्।

*इति चतुर्थावरणम्।*

---

पश्चात् जल लेकर, 'एताश्चतुर्थावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' पढ़कर जल छोड़ दे।

पश्चात् पुष्प लेकर 'अभिष्टसिद्धिं मे देहि०' से 'चतुर्थावरणार्चनम्' तक पढ़कर पुष्प चढ़ावे। पुनः एक आचमनी जल लेकर 'अनेन चतुर्थावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर छोड़ दे और योनिमुद्रा से प्रणाम करे।

*इस प्रकार चतुर्थावरण समाप्त।*

पञ्चमावरणम्

ततश्चतुर्विंशतिदले स्वाग्रादिप्रादक्षिण्येन—ह्रीं विं विष्णुमायायै नमः, विष्णुमायाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं चें चेतनायै नमः, चेतनाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं बुं बुद्ध्यै नमः, बुद्धिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं निं निद्रायै नमः, निद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्षुं क्षुधायै नमः, क्षुधाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं छां छायायै नमः, छायाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं शं शक्त्यै नमः, शक्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं तृं तृष्णायै नमः, तृष्णाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्षां क्षान्त्यै नमः, क्षान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं जां जात्यै नमः, जातिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं लं लज्जायै नमः, लज्जाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं शां शान्त्यै नमः, शान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं श्रं श्रद्धायै नमः, श्रद्धाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं कां कान्त्यै नमः, कान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं लं लक्ष्म्यै नमः, लक्ष्मीशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं धृं धृत्यै नमः, धृतिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं वृं वृत्त्यै

---

पंचमावरण- अक्षत और पुष्प लेकर 'ह्रीं विं विष्णुमायायै नमः'

नमः, वृत्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं श्रुं श्रुत्यै नमः, श्रुतिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं स्मृं स्मृत्यै नमः, स्मृतिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं दं दयायै नमः, दयाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं तुं तुष्ट्यै नमस्तुष्टिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं पुं पुष्ट्यै नमः, पुष्टिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं मां मातृभ्यो नमः, मातृशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं भ्रां भ्रान्त्यै नमः, भ्रान्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि।

पञ्चमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि। सामान्यार्घजलमादाय, एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु। पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्॥५॥

पुष्पाञ्जलिं दत्वा। अनेन पञ्चमावरणदेवतापूजनेन

---

से लेकर 'पंचमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि' तक पढ़कर यन्त्र पर चढ़ा दे।

पश्चात् जल लेकर, 'एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' कहकर जल छोड़ दे।

पुनः फूल लेकर 'अभिष्टसिद्धिं मे देहि०' से आरम्भ कर 'पञ्चमावरणार्चनम्' पर्यन्त पढ़कर पुष्प अर्पण करे।

**त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्। योनिमुद्रया प्रणमेत्।**

*इति पञ्चमावरणम्।*

षष्ठावरणम्

**भूपुरे कोणचतुष्टये आग्नेयादिकोणमारभ्य—ह्रीं गं गणपतये नमः गणपतिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्षं क्षेत्रपालाय नमः, क्षेत्रपालशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं बं बटुकाय नमः, बटुकशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं यां योगिन्यै नमः, योगिनीशक्ति-श्रीपादुकां पूजयामि तर्पयामि। षष्ठावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि।**

**सामान्यार्घजलमादाय, एताः षष्ठावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु।**

---

तदनन्तर एक आचमनी जल लेकर 'अनेन पंचमावरणदेवता-अनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर जल छोड़ दे और योनिमुद्रा से प्रणाम करे।

*इस प्रकार पञ्चमावरण समाप्त।*

षष्ठावरण- हाथ में अक्षत और फूल लेकर 'ह्रीं गं गणपतये नमः' से आरम्भ कर 'षष्ठावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि' पर्यन्त पढ़कर यन्त्र पर चढ़ावे।

पश्चात् एक आचमनी में जल लेकर, 'एताः षष्ठावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' पढ़कर जल गिरा दे।

पुष्पाञ्जलिमादाय,
अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठावरणार्चनम् ।।६।।

पुष्पाञ्जलिं दत्वा। अनेन षष्ठावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्। योनिमुद्रया प्रणमेत्।

*इति षष्ठावरणम्।*

सप्तमावरणम्

पूर्वादिदशदिक्षु—ह्रीं लं इन्द्राय नमः इन्द्रशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं रं अग्नये नमः अग्निशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं यं यमाय नमः यमशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं क्षं निर्ऋतये नमः निर्ऋतिशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं वं वरुणाय नमः वरुण-शक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं यं वायवे नमः वायुशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं सं सोमाय नमः

---

फिर हाथ में पुष्प लेकर 'अभिष्टसिद्धिं मे देहि०' श्लोक पढ़कर मूर्ति पर चढ़ा दें।

इस प्रकार पुष्पाञ्जलि दे एक आचमनी जल लेकर 'अनेन षष्ठावरणदेवता-पूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' कहकर जल छोड़ दे और योनिमुद्रा से प्रणाम करे।

*इस प्रकार षष्ठावरण-पूजन समाप्त।*

सप्तमावरण- हाथ में अक्षत, पुष्प लेकर 'ह्रीं लं इन्द्राय नमः०'

सोमशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं हं ईशानाय नमः ईशानशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं ब्रं ब्रह्मणे नमः ब्रह्मशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं अनन्ताय नमः अनन्तशक्तिश्रीपादुकां पूजयामि तर्पयामि। सप्तमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि।

सामान्यार्घजलमादाय, एताः सप्तमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु। पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥७॥

पुष्पाञ्जलिं दत्वा। अनेन सप्तमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादिवता प्रीयताम्। योनिमुद्रया प्रणमेत्।

*इति सप्तमावरणम्।*

---

से प्रारम्भ कर 'सप्तमावरणदेवताभ्यो नमः, गन्धं पुष्पं समर्पयामि' तक पढ़कर यन्त्र पर चढ़ा दे।

तत्पश्चात् आचमनी में जल लेकर, 'एताः सप्तमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' कहकर जल छोड़ दे। पुनः पुष्प लेकर 'अभिष्टसिद्धिं मे देहि०' से 'सप्तमावरणार्चनम्' तक पढ़कर मूर्ति पर रख दे। इस प्रकार पुष्पाञ्जलि देकर, एक आचमनी जल लेकर 'अनेन सप्तमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' पढ़कर जल गिरा दे एवं योनिमुद्रा से हाथ जोड़कर प्रणाम करे।

*इस प्रकार सप्तमावरण समाप्त।*

अष्टमावरणम्

तद्बहिः पूर्वादिदिषु-ह्रीं वं वज्राय नमः वज्रशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं शं शक्त्यै नमः शक्तिशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं दं दण्डाय नमः दण्डशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं खं खड्गाय नमः खड्गशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं पां पाशाय नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं अं अङ्कुशाय नमः अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं गं गदायै नमः गदाशक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं त्रिं त्रिशूलाय नमः त्रिशूलशक्ति-श्रीपादुकां पूजयामि तर्पयामि। ह्रीं पं पद्माय नमः पद्म-शक्तिश्रीपादुकां पूजयामि तर्पयामि। ह्रीं चं चक्राय नमः चक्रशक्ति-श्रीपादुकां पूजयामि तर्पयामि। अष्टमावरण-देवताभ्यो नमः गन्धं पुष्पं समर्पयामि।

सामान्यार्घजलमादाय-एता अष्टमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु। पुष्पाञ्जलिमादाय,

---

अष्टमावरण- हाथ में अक्षत, पुष्प लेकर 'ह्रीं वं वज्राय नमः०' से लेकर 'अष्टमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि' तक पढ़कर मूर्ति पर चढ़ा दे। पुनः जल लेकर, 'एताः अष्टमावरण-देवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' पढ़कर जल गिरा दे।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यमष्टमावरणार्चनम् ।।

पुष्पाञ्जलिं दत्वा । अनेनाऽष्टमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

*इति अष्टमावरणम् ।*

नवमावरणम्

कलशात् पूर्वादिदिक्षु-ह्रीं वज्रहस्तायै गजारूढायै कादम्बरीदेव्यै नमः कादम्बरीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । शक्तिहस्तायै अजवाहनायै उल्कादेव्यै नमः उल्कादेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । दण्डहस्तायै महिषारूढायै करालीदेव्यै नमः करालीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै नमः रक्ताक्षीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । पाशहस्तायै मकरवाहनायै श्वेताक्षीदेव्यै नमः श्वेताक्षीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । अङ्कुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै नमः हरिताक्षीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि । गदाहस्तायै सिंहारूढायै यक्षिणीदेव्यै

---

पुनः हाथ में फूल लेकर 'अभिष्टसिद्धिं मे देहि शरणागतवत्सले०' श्लोक पढ़कर मूर्ति पर चढ़ा दे ।

पश्चात् हाथ में जल लेकर, 'अनेनाऽष्टमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' पढ़कर जल गिरा दे तथा योनिमुद्रा दिखाकर प्रणाम करे ।

*इस प्रकार अष्टमावरण समाप्त ।*

नमः यक्षिणीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि। शूलहस्तायै वृषभवाहनायै कालीदेव्यै नमः कालीदेवी-शक्तिश्रीपादुकां पूजयामि तर्पयामि। पद्महस्तायै हंस-वाहनायै सुरज्येष्ठादेव्यै नमः सुरज्येष्ठादेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि। चक्रहस्तायै सर्पवाहनायै सर्पराज्ञीदेव्यै नमः सर्पराज्ञीदेवी-शक्तिश्रीपादुकां पूजयामि तर्पयामि।

नवमावरणदेवताभ्यो नमः गन्धं पुष्पं समर्पयामि।

सामान्यार्घजलमादाय, एताः नवमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु।

पुष्पाञ्जलिमादाय,

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम्॥

पुष्पाञ्जलिं दत्वा। अनेन नवमावरणदेवतापूजनेन

---

नवमावरण- हाथ में अक्षत और पुष्प लेकर कलशा से पूर्वादि दिशाओं में - 'ह्रीं वज्रहस्तायै गजारूढायै०' से लेकर 'गन्धं पुष्पं समर्पयामि' तक पढ़कर यन्त्रस्थित दुर्गा प्रतिमा पर चढ़ावे।

पुनः आचमनी में जल लेकर, 'एताः नवमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिताः सन्तु' पढ़कर जल छोड़ दे।

पुनः हाथ में फूल लेकर, 'अभिष्टसिद्धिं मे देहि०' से 'नवमावरणार्चनम्' तक पढ़कर मूर्ति पर अर्पित कर दे।

पश्चात् एक आचमनी जल लेकर 'अनेन नवमावरणदेवतापूजनेन

त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् । योनिमुद्रया प्रणमेत् ।

*इति नवमावरणम् ।*

*इति दुर्गार्चनपद्धतौ आवरणपूजा समाप्ता ।*

●

# अखण्डदीपपूजनम्

**सुप्रकाशो महादीप्तः सर्वतस्तिमिरापहः ।**
**स-बाह्याभ्यन्तर-ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।।**

**ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा । ज्ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ।।**

**दीपस्थदेवताभ्यो नमः, सर्वोपचारार्थे गन्धा-ऽक्षत-पुष्पाणि समर्पयामि । इति सम्पूज्य, प्रार्थयेत् ।**

दीप-प्रार्थना

**भो दीप ! देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ।**
**यावत् कर्मसमाप्तिः स्यात्तावदत्र स्थिरो भव ।।**

*इति दुर्गार्चनपद्धतौ अखण्डदीपपूजनम् ।*

---

त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम्' पढ़कर जल गिरा दे, एवं योनिमुद्रा द्वारा देवी को प्रणाम करे।

*इस प्रकार नवमावरण समाप्त।*

अखण्डदीपपूजन-'सुप्रकाशो महादीप:०' श्लोक तथा 'ॐ अग्नि-ज्योंतिर्ज्योतिरग्नि०' मन्त्र एवं 'दीपस्थदेवताभ्यो नम:' से 'समर्पयामि'

# धान्यकलशस्थापनम्

मृत्तिकामध्ये यवं प्रक्षिप्य, मृत्तिकाघटं सर्वतोभद्र-मण्डलाग्रेऽखण्डदीपमध्ये च 'मही द्यौ'रित्यादि-मन्त्रेण कलश-पूजनोक्तविधिना स्थापयेत्।

*इति दुर्गार्चनपद्धतौ धान्यकलशस्थापनम्।*

# बलिदानम्

'नारिकेलबलये नमः' इत्यनेन पञ्चोपचारैः नारिकेलं सम्पूज्य, देव्याः पुरतः नारिकेलबलिं तुभ्यं समर्पयामि' इत्युक्त्वा, नवार्णमन्त्रेण वीरासनमुद्रया एकहस्तेन एकवारमेव बलिं स्फोटयित्वा देव्यै निवेदयेत्।

*इति दुर्गार्चनपद्धतौ बलिदानं समाप्तम्।*

---

तक पढ़कर चन्दन, अक्षत एवं पुष्प समर्पित करे। पश्चात् 'भो दीप! देवरूपस्त्व०' श्लोक पढ़कर दीप की प्रार्थना करें।

*इस प्रकार अखण्डदीपपूजन समाप्त।*

धान्यकलशस्थापन-अखण्ड दीप के मध्य, चौकी के आगे मिट्टी बिछाकर, उस पर जौ छिड़ककर, मृत्तिका-कलश 'मही द्यौः पृथिवी च न०' इत्यादि मन्त्र द्वारा कलशपूजन विधि से स्थापित करे।

*इस प्रकार दुर्गार्चनपद्धति में धान्यकलशस्थापन समाप्त।*

बलिदान-'नारिकेलबलये नमः' पढ़कर पंचोपचार से नारिकेल (नारियल) की पूजा कर, देवी के आगे 'नारिकेलबलिं तुभ्यं समपर्यामि' कहकर, नवार्ण मन्त्र (ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे) से वीरासन

# बटुक-कुमारिका-पूजनम्

हस्ते-ऽक्षत-पुष्पाणि गृहीत्वा,

कर-कलित-कपालः कुण्डली-दण्डपाणि-
स्तरुण-तिमिरनील-व्यालयज्ञोपवीती ।
क्रतुसमय-सपर्याद् विघ्नविच्छेदहेतु-
र्जयति बटुकनाथः सिद्धिदः साधकानाम् ।।

इति श्लोकं पठित्वा, 'बं बटुकाय नमः' इत्यनेन बटुकम्,

मन्त्राक्षरमयीं देवीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ।।

'कुमार्यै नमः' इत्यनेन कुमारीं च सम्पूज्य, तयोर्भाले तिलकं कृत्वा, मिष्टान्न-दक्षिणां च दत्वा प्रणमेत् ।

*इति दुर्गार्चनपद्धतौ बटुककुमारिकापूजनम् ।*

---

(दोनों घुटने जमीन पर टेक) मुद्रा द्वारा एक हाथ से एक बार में ही नारियल को फोड़कर देवी को समर्पित करे ।

*इस प्रकार बलिदान समाप्त ।*

बटुक-कुमारिका-पूजन— दाहिने हाथ में अक्षत और फूल लेकर, 'करकलित-कपालः०' श्लोक पढ़कर 'बं बटुकाय नमः' से बटुक, 'मन्त्राक्षरमयीं०' तथा 'कुमार्यै नमः' से कुमारी की पूजा कर, दोनों के मस्तक में तिलक लगाकर, मीठा और दक्षिणा अर्पण कर प्रणाम करें ।

*इस प्रकार बटुक-कुमारिका-पूजन समाप्त ।*

# ब्राह्मणपूजनम्

'ब्रह्मणे नमः' इत्युक्त्वा पाठकर्तृकाणां ब्राह्मणानां गन्धा-ऽक्षत-पुष्पादिभिः पूजनं कुर्यात् ।

# सरस्वतीपूजनम्

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥

इत्यनेन दुर्गासप्तशती-पुस्तक-पूजनं गन्धा-ऽक्षत-पुष्पैः कुर्यात् ।

*इति दुर्गार्चनपद्धतौ सरस्वतीपूजनम् ।*

तत्पश्चात् दुर्गासप्तशती-पाठं कुर्यात् ।

●

---

ब्राह्मणपूजन—'ब्रह्मणे नमः' कहकर पाठ करने वाले सभी ब्राह्मणों को गन्ध (रोली), अक्षत एवं पुष्प से पूजन करे ।

सरस्वतीपूजन—'पावका नः सरस्वती०' मन्त्र तथा 'नमो देव्यै०' श्लोक पढ़कर दुर्गासप्तशती पुस्तक की पूजा चन्दन, अक्षत और पुष्प से करे ।

इसके बाद दुर्गासप्तशती का पाठ करे ।

*इस प्रकार सरस्वतीपूजन समाप्त ।*

●

श्री दुर्गादेव्यै नमः



विद्युद्दाम-समप्रभां मृगपति-स्कन्ध-स्थितां भीषणां
कन्याभिः करवाल-खेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्र-गदाऽसि-खेट-विशाखांश्चापं गुणं तर्जनीं
विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुल-जन-प्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि ! विश्वम् ॥



# दुर्गासप्तशती-पाठविधिः

तत्राऽऽदौ आचमन-प्राणायामपूर्वकं सङ्कल्पं कुर्यात्।

हस्ते जला-ऽक्षत-पुष्प-द्रव्याण्यादाय, ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्याऽद्य श्रीब्रह्मणोऽह्नि द्वितीये परार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बूदीपे भारतवर्षे भरतखण्डे आर्यावर्तैकदेशे पुण्यप्रदेशे (अविमुक्तवाराणसीक्षेत्रे, आनन्दवने महाश्मशाने गौरीमुखे त्रिकण्टकविराजिते भागीरथ्याः पश्चिमभागे) विक्रमशके बौद्धावतारे अमुकनाम-संवत्सरे-श्रीसूर्ये अमुकायने अमुकऋतौ महामाङ्गल्यप्रद-मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथा-राशिस्थान-स्थितेषु सत्सु एवं ग्रहगुणगण-विशेषण-विशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुति-स्मृति-पुराणोक्तफल-प्राप्त्यर्थम् अमुकगोत्रोत्पन्नः अमुकशर्माऽहम् (अमुकगोत्रस्य सपत्नीकस्य यजमानस्य) आयुरारोग्यैश्वर्याऽभिवृद्ध्यर्थं पुत्र-पौत्राद्यनवच्छिन्न-सन्तति-वृद्धि-स्थिरलक्ष्मीकीर्तिलाभशत्रुपराजय-सदभीष्ट-सिद्ध्यर्थं श्रीमहाकाली-महालक्ष्मी-महासरस्वती-

---

पाठविधि–सर्वप्रथम आचमन-प्राणायाम कर, हाथ में जल, अक्षत,

**त्रिगुणात्मिका-पराम्बाजगदम्बाप्रीत्यर्थं च 'मार्कण्डेय उवाच' इत्यारभ्य 'सावर्णिर्भविता मनुः' इत्यन्तं सप्तशतीपाठं (अमुकमन्त्रेण प्रतिमन्त्रसम्पुटितं) तत्राऽऽदौ कवचाऽर्गला-कीलकमाद्यन्तयोर्नवार्णमन्त्रजपपुरस्सरं क्रमेण रात्रिसूक्त-देवी-सूक्तपठनमन्ते रहस्यत्रयपठनं च करिष्ये।**

## ब्रह्मादि-शाप-विमोचनम्

विनियोगः

ॐ अस्य श्रीचण्डिकाया ब्रह्म-वसिष्ठ-विश्वामित्रशाप-विमोचन-मन्त्रस्य वसिष्ठ-नारद-संवाद-सामवेदाधिपतिब्रह्माण ऋषयः सर्वैश्वर्यकारिणी श्रीदुर्गादेवता चरित्रत्रयं बीजं ह्रीं शक्तिः, त्रिगुणात्मस्वरूपचण्डिकाशाप-विमुक्तौ मम सङ्कल्पितकार्य-सिद्ध्यर्थं जपे विनियोगः। पाठः—

**ॐ (ह्रीं) रीं रेतःस्वरूपिण्यै मधुकैटभमर्दिन्यै ब्रह्म-वसिष्ठविश्वामित्रशापाद् विमुक्ता भव ॥१॥ ॐ श्रीं बुद्धि-स्वरूपिण्यै महिषासुरसैन्यनाशिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ॥२॥ ॐ रं रक्तस्वरूपिण्यै महिषासुर-मर्दिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ॥३॥ ॐ क्षुं क्षुधास्वरूपिण्यै देववन्दितायै ब्रह्मवसिष्ठविश्वामित्र-शापाद् विमुक्ताभव ॥४॥ ॐ छां छायास्वरूपिण्यै दूत-संवादिन्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव ॥५॥**

---

पुष्प एवं द्रव्य लेकर, 'ॐ विष्णुर्विष्णुर्विष्णुः०' से 'रहस्यत्रय-पठनं च करिष्ये' तक पढ़कर भूमि पर जल छोड़ दे।

ब्रह्मादिशापविमोचन-विनियोग- तत्पश्चात् हाथ में जल लेकर 'ॐ अस्य चण्डिकाया०' से आरम्भ कर 'जपे विनियोगः' पर्यन्त पढ़कर जल छोड़ दे।

ॐ शं शक्तिस्वरूपिण्यै धूम्रलोचन-घातिन्यै ब्रह्मवसिष्ठ-विश्वामित्र-शापाद् विमुक्ता भव।६।। ॐ तृं तृषा-स्वरूपिण्यै चण्डमुण्डवधकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।७।। ॐ क्षां क्षान्तिस्वरूपिण्यै रक्तबीज-वधकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।८।। ॐ जां जातिस्वरूपिण्यै निशुम्भवधकारिण्यै ब्रह्मवसिष्ठ विश्वामित्र-शापाद् विमुक्ता भव।।९।। ॐ लं लज्जा-स्वरूपिण्यै शुम्भवधकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।१०।। ॐ शां शान्तिस्वरूपिण्यै देवस्तुत्यै ब्रह्म-वसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।११।। ॐ श्रं श्रद्धास्वरूपिण्यै सकलफलदात्र्यै ब्रह्मवसिष्ठविश्वामित्र-शापाद् विमुक्ता भव।।१२।। ॐ कां कान्तिस्वरूपिण्यै राजवरप्रदायै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।१३।। ॐ मां मातृस्वरूपिण्यै अनर्गलमहिमसहितायै ब्रह्मवसिष्ठ-विश्वामित्रशापाद् विमुक्ता भव।।१४।। ॐ ह्रीं श्रीं दुं दुर्गायै सं सर्वैश्वर्यकारिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।१५।। ॐ ऐं ह्रीं क्लीं नमः शिवायै अभेद्यकवचस्वरूपिण्यै ब्रह्मवसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।१६।। ॐ क्रीं काल्यै कालि ह्रीं फट् स्वाहायै ऋग्वेदस्वरूपिण्यै ब्रह्म-वसिष्ठविश्वामित्रशापाद् विमुक्ता भव।।१७।। ॐ ऐं ह्रीं क्लीं महाकालीमहालक्ष्मीमहा-सरस्वतीस्वरूपिण्यै त्रिगुणात्मिकायै दुर्गादेव्यै नमः।।१८।।

---

तदनन्तर 'ॐ (ह्रीं) रीं रेतःस्वरूपिण्यै० ॥१॥' से लेकर 'दुर्गादैव्यै नमः ॥१८॥' तक पाठ करें।

फलश्रुतिः

**इत्येवं हि महामन्त्रान् पठित्वा परमेश्वर! ।**
**चण्डीपाठं दिवा रात्रौ कुर्यादेव न संशयः ।।१९।।**
**एवं मन्त्र न जानाति चण्डीपाठं करोति यः ।**
**आत्मानं चैव दातारं क्षीणं कुर्यान्न संशयः ।।२०।।**

*इति रुद्रयामले ब्रह्मादि-शापविमोचनं समाप्तम् ।*

●

# सिद्ध-कुञ्जिका-स्तोत्रम्

शिव उवाच

**शृणु देवि! प्रवक्ष्यामि कुञ्जिकास्तोत्रमुत्तमम् ।**
**येन मन्त्रप्रभावेण चण्डीजापः शुभो भवेत् ।।१।।**
**न कवचं नाऽर्गलास्तोत्रं कीलकं न रहस्यकम् ।**
**न सूक्तं नाऽपि ध्यानं च न न्यासो न च वाऽर्चनम् ।।२।।**

---

फलश्रुति-पार्वती ने शंकर जी से कहा-हे परमेश्वर! इस प्रकार इन महामन्त्रों को पढ़कर दिन एवं रात्रि में सप्तशती-पाठ करे ।।१९।। यदि जो साधक इन महामन्त्रों का पाठ न कर सप्तशती पाठ करता है वह निःसन्देह अपना एवं यजमान का नाश करता है ।।२०।।

**कुञ्जिका-स्तोत्र**

भगवान् शंकर ने पार्वती से कहा-हे देवि! मैं इस उत्तम कुंञ्जिका-स्तोत्र का वर्णन करता हूँ। जिस कुञ्जिका मन्त्र के प्रभाव से ही चण्डी (दुर्गा) पाठ का पूर्ण फल प्राप्त होता है ।।१।। कवच, अर्गला, कीलक और तीनों रहस्य–देवीसूक्त, रात्रिसूक्त, प्रथम, मध्यम, उत्तम चरित्र के ध्यान, न्यास, पूजन आदि जो कि दुर्गासप्तशतीपाठ

**कुञ्जिकापाठमात्रेण दुर्गापाठफलं लभेत्।**
**अति गुह्यतरं देवि! देवानामपि दुर्लभम्॥३॥**
**गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति!।**
**मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम्।**
**पाठमात्रेण संसिद्ध्येत् कुञ्जिकास्तोत्रमुत्तमम्॥४॥**

**मन्त्रः- ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे। ॐ ग्लौं हुं क्लीं जूं सः ज्वालय ज्वालय ज्वल ज्वल प्रज्वल प्रज्वल ऐं ह्रीं क्लीं चामुण्डायै विच्चे ज्वल हं सं लं क्षं फट् स्वाहा।** इति मन्त्रः

**नमस्ते रुद्ररूपिण्यै नमस्ते मधुमर्दिनि।**
**नमः कैटभहारिण्यै नमस्ते महिषार्दिनि॥१॥**
**नमस्ते शुम्भहन्त्र्यै च निशुम्भासुरघातिनि॥२॥**

---

के लिए अत्यावश्यक है, ये सभी केवल कुञ्जिका स्तोत्र के पाठ मात्र से ही दुर्गासप्तशती पाठ का फल प्राप्त होता है। हे देवि! यह कुञ्जिका स्तोत्र अत्यन्त गोपनीय एवं देवताओं के लिए भी दुर्लभ है॥२-३॥ अतः हे पार्वती! अपने गुप्तांग के समान इसे गुप्त ही रखना चाहिए। इस कुञ्जिकास्तोत्र के पाठ मात्र से ही मारण, मोहन, वशीकरण, स्तम्भन तथा उच्चाटन आदि सभी कार्य सिद्ध होते हैं॥४॥

मन्त्र-'ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे०' से लेकर 'हं सं लं क्षं फट् स्वाहा' तक कुञ्जिका मन्त्र है।

शिवस्वरूपिणी, मधु-कैटभनाशिनी, महिषासुरघातिनी और शुम्भ-निशुम्भ नामक दैत्य को नष्ट करनेवाली आपको नमस्कार

जाग्रतं हि महादेवि! जपं सिद्धं कुरुष्व मे।
ऐंकारी सृष्टिरूपायै ह्रींकारी प्रतिपालिका ॥३॥
क्लींकारी कामरूपिण्यै बीजरूपे नमोऽस्तु ते।
चामुण्डा चण्डघाती च यैकारी वरदायिनी ॥४॥
विच्चे चाऽभयदा नित्यं नमस्ते मन्त्ररूपिणी ॥५॥
धां धीं धूं धूर्जटेः पत्नी वां वीं वूं वागधीश्वरी।
क्रां क्रीं क्रूं कालिका देवि! शां शीं शूं मे शुभं कुरु ॥६॥
हुं हुं हुंकाररूपिण्यै जं जं जं जम्भनादिनी।
भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ॥७॥
अं कं चं टं तं पं यं शं वीं दुं ऐं वीं हं क्षं
धिजाग्रं धिजाग्रं त्रोटय त्रोटय दीप्तं कुरु कुरु स्वाहा ॥

---

है ॥१-२॥ हे महादेवी! आप मेरे जप को सिद्ध करें। आप ऐं रूप से जगत् की उत्पत्ति, ह्रीं रूप से पालन, क्लीं रूप से संहार करने वाली, चामुण्डा रूप से चण्ड-मुण्ड नामक दैत्य का वध करने वाली, यै स्वरूप से भक्तों को अभीष्ट वर देने वाली तथा विच्चे रूप से अभय प्रदान करने वाली, नवार्ण मन्त्र स्वरूपवाली हे जगदम्बा! आपको नमस्कार है ॥३-५॥

धां धीं धूं स्वरूप धूर्जटी (शंकर) की पत्नी, वां वीं वूं स्वरूप वाग् (वाणी) की अधीश्वरी सरस्वती, क्रां क्रीं क्रूं रूपिणी कालिका, शां शीं शूं स्वरूपिणी शान्ति देवी, मेरा कल्याण करें ॥६॥

हुं हुं स्वरूपवाली हुंकाररूपिणी देवी, जं जं जं रूपिणी जम्भनादिनी देवी तथा भ्रां भ्रीं भ्रूं स्वरूपवाली भैरवी, भद्रा तथा भवानी आपको बारम्बार नमस्कार है ॥७॥ 'अं कं चं टं तं०' से

पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा ।
सां सीं सूं सप्तशती देव्या मन्त्र सिद्धिं कुरुष्व मे ।।८।।
इदं तु कुञ्जिकास्तोत्रं मन्त्रजागर्तिहेतवे ।
अभक्ते नैव दातव्यं गोपितं रक्ष पार्वति ! ।।९।।
यस्तु कुञ्जिकया देवि ! हीनां सप्तशतीं पठेत् ।
न तस्य जायते सिद्धिररण्ये रोदनं यथा ।।१०।।

*इति रुद्रयामलस्थ-गौरीतन्त्रे शिव-पार्वती-संवादे*
*कुञ्जिकास्तोत्रं सम्पूर्णम् ।*

•

# दुर्गाकवचम्

विनियोगः- ॐ अस्य श्री चण्डीकवचस्य ब्रह्मा ऋषिः, अनुष्टुप्

---

'कुरु कुरु स्वाहा' तक पाठ करे। पां पीं पूं स्वरूपिणी पार्वती, पूर्णा, खां खीं खूं रूपिणी खेचरी तथा सां सीं सूं स्वरूपवाली दुर्गासप्तशती के समस्त मन्त्रों की सिद्धि हे देवि ! मुझे प्राप्त हो ।।८।।

फलश्रुति—इस कुञ्जिकास्तोत्र के पाठ मात्र से ही दुर्गासप्तशती के समस्त मन्त्र सिद्ध होते हैं। हे पार्वती ! इस गुप्त स्तोत्र का रहस्य नास्तिक अर्थात् शास्त्र में अश्रद्धालु जनों के लिए नहीं बताना चाहिए ।।९।। हे देवि ! जो इस कुञ्जिकास्तोत्र के पाठ बिना दुर्गासप्तशती का पाठ करता है, उसे अरण्य (जंगल) में रोदन के समान सिद्धि प्राप्त नहीं होती अर्थात् उसका सप्तशती पाठ व्यर्थ होता है ।।१०।।

*इस प्रकार रुद्रयामल-स्थित गौरीतन्त्रोक्त शिव-पार्वती*
*संवादरूप कुञ्जिकास्तोत्र समाप्त ।*

•

विनियोग— दाहिने हाथ में जल लेकर 'ॐ अस्य श्रीचण्डी-

छन्दः, चामुण्डा देवता, अङ्गन्यासोक्तमातरो बीजम्, दिग्बन्ध-देवता-स्तत्त्वम्, श्रीजगदम्बाप्रीत्यर्थे सप्तशतीपाठाङ्गत्वेन जपे विनियोगः[१] । ॐ नमश्चण्डिकायै ॥

मार्कण्डेय उवाच

**ॐ यद् गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।**
**यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥१॥**

ब्रह्मोवाच

**अस्ति गुह्यतमं विप्र सर्वभूतोपकारम् ।**
**देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥२॥**
**प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।**
**तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥३॥**

कवचस्य०' से 'जपे विनियोगः' तक पढ़कर भूमि पर जल छोड़ दे ।

मार्कण्डेय जी कहा-हे पितामह ! जो साधन संसार में अत्यन्त गोपनीय है, जिससे मनुष्यमात्र की रक्षा होती है, तथा आपने अब तक जिसे किसी से भी प्रकट नहीं किया है, वह साधन मुझे बताइए ॥१॥

ब्रह्मा जी ने कहा-हे ऋषिश्रेष्ठ ! सम्पूर्ण प्राणियों का कल्याण करने वाला देवी का कवच (रक्षा के लिए पहने जाने वाले एक विशेष प्रकार के पहनावे को कवच कहते हैं। इसी तरह यह स्तोत्र भी है, इसके पाठ से साधक सर्वथा सुरक्षित रहता है।) अत्यन्त गोपनीय है, हे महामुने ! उसे सुनिये ॥२॥

हे मुने ! दुर्गा की नव शक्तियाँ हैं–पहली शक्ति का नाम शैलपुत्री

१. न्यासो ध्याना-ऽऽवाहने च नाम - सूक्तानि चाप्यनु ।
दलं च हृदयं चैव कवचा - ऽर्गल - कीलकम् ॥
दशाङ्गमेतद् विज्ञेयमिति गुह्यं सनातनम् ।
दशाङ्गानि च जप्त्वा तु पश्चात् सप्तशतीं पठेत् ॥

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ।।४।।
नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना: ।।५।।
अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ।
विषमे दुर्गमे चैव भयार्ताः शरणं गताः ।।६।।
न तेषां जायते किञ्चिदशुभं रणसङ्कटे ।
नापदं तस्य पश्यामि शोक-दुःख-भयं न हि ।।७।।

---

(हिमालय-कन्या पार्वती) है, दूसरी शक्ति का नाम ब्रह्मचारिणी (परब्रह्म परमात्मा को साक्षात् कराने वाली), तीसरी शक्ति चन्द्रघण्टा (चन्द्रमा जिसकी घण्टा में हों) है। चौथी शक्ति कूष्माण्डा (सारा संसार जिसके उदर में निवास करता हो) हैं ॥३॥ पाँचवीं शक्ति स्कन्दमाता (कार्तिकेय की जननी) हैं। छठीं शक्ति कात्यायनी (महर्षि कात्यायन के अप्रतिभ तेज से उत्पन्न होने वाली) हैं, सातवीं शक्ति कालरात्रि (समस्त सृष्टि का संहार करने वाली) तथा आठवीं शक्ति महागौरी (शिव के महाकाली कहने पर क्रोध से जिन्होंने तपस्या कर ब्रह्मदेव से गौर वर्ण का वरदान लेनेवाली) हैं ॥४॥ नवीं शक्ति सिद्धिदात्री (समस्त जगत् को १. अणिमा, २. लघिमा, ३. प्राप्ति, ४. प्राकाम्य, ५. महिमा, ६. ईशित्व, ७. वशित्व, ८. कामा-वसायिता इन आठ रूपों से सिद्धि देनेवाली) हैं। ये नव दुर्गा कही गयी हैं। ये शक्तियाँ सर्वज्ञ ब्रह्मदेव (वेद) द्वारा कही गयी हैं ॥५॥

जो मनुष्य अग्नि में जल रहा हो, युद्ध-भूमि में शत्रुओं से घिर गया हो, तथा अत्यन्त कठिन विपत्ति में फँस गया हो, वह यदि भगवती दुर्गा के शरण का आश्रय ले ले, तो उसका कभी युद्ध

यैस्तु भक्त्या स्मृता नूनं तेषां वृद्धिः प्रजायते ।
ये त्वां स्मरन्ति देवेशि रक्षसे तान्न संशयः ।।८।।
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ।
ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ।।९।।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ।
लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ।।१०।।
श्वेतरूपधरा देवी ईश्वरी वृषवाहना ।
ब्राह्मी हंससमारूढा सर्वाभरण-भूषिता ।।११।।
इत्येता मातरः सर्वाः सर्वयोगसमन्विताः ।
नानाभरण-शोभाढ्या नानारत्नोपशोभिताः ।।१२।।

---

या संकट में कोई कुछ बिगाड़ नहीं सकता, उसे कोई विपत्ति घेर नहीं सकती और न उसे शोक, दुःख तथा भय की प्राप्ति ही हो सकती है ।।६-७।।

जो लोग भक्तिपूर्वक भगवती का स्मरण करते हैं, उनका अभ्युदय होता रहता है। हे भगवती ! जो लोग तुम्हारा स्मरण करते हैं, निश्चय ही तुम उनकी रक्षा करती हो ।।८।। प्रथम चामुण्डा (चण्ड-मुण्ड का विनाश करने वाली) देवी प्रेत के वाहन पर निवास करती हैं, वाराही महिष के आसन पर रहती हैं, ऐन्द्री का वाहन ऐरावत हाथी है, वैष्णवी का वाहन गरुड़ है ।।९।। माहेश्वरी बैल के वाहन पर तथा कौमारी मोर के आसन पर विराजमान हैं। श्री विष्णुपत्नी–भगवती लक्ष्मी के हाथों में कमल है तथा वे कमल के आसन पर निवास भी करती हैं ।।१०।। श्वेतवर्ण वाली ईश्वरी वृष (बैल) पर सवार हैं, भगवती ब्रह्माणी (सरस्वती) सम्पूर्ण आभूषणों से युक्त हैं तथा वे हंसासन पर विराजमान रहती हैं ।।११।। अनेक

दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ।
शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ।।१३।।
खेटकं तोमरं चैव परशुं पाशमेव च ।
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ।।१४।।
दैत्यानां देहनाशाय भक्तानामभयाय च ।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ।।१५।।
**नमस्तेऽस्तु महारौद्रे महाघोर-पराक्रमे ।**
**महाबले महोत्साहे महाभय-विनाशिनि ।।१६।।**
**त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ।**
**प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।।१७।।**

---

आभूषण तथा रत्नों से देदीप्यमान उपर्युक्त सभी देवियाँ सभी योग-शक्तियों से युक्त हैं ।।१२।।

इनके अतिरिक्त और भी देवियाँ हैं, जो दैत्यों के विनाश के लिए तथा भक्त-जनों की रक्षा के लिए क्रोधयुक्त होकर रथ में सवार रहती हैं तथा इनके हाथों में शंख, चक्र, गदा, शक्ति, हल, मुसल, खेटक, तोमर, परशु (फरसा), पाश (शत्रुओं को बाँधने वाला विशेष प्रकार का अस्त्र), भाला, त्रिशूल तथा उत्तम शार्ङ्गधनुष आदि अस्त्र-शस्त्र विराजमान हैं। देवताओं की रक्षा करना ही एक मात्र उनके अस्त्र-शस्त्र धारण का उद्देश्य है ।।१३-१५।।

महाभय का विनाश करने वाली, महान् बल, महाघोर पराक्रम तथा महान् उत्साह से सुसम्पन्न हे महारौद्रे ! (महारुद्र की शक्ति) तुम्हें नमस्कार है ।।१६।। हे शत्रुओं का भय बढ़ाने वाली देवि ! तुम मेरी रक्षा करो। दुर्धर्ष तेज के कारण मैं, तुम्हारी ओर देख भी नहीं सकता। ऐन्द्री शक्ति पूर्व दिशा में मेरी रक्षा करे तथा

दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ।
प्रतीच्यां वारुणी रक्षेद् वायव्यां मृगवाहिनी ।।१८।।
उदीच्यां पातु कौमारी ऐशान्यां शूलधारिणी ।
ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद् वैष्णवी तथा ।।१९।।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ।
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ।।२०।।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ।
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ।।२१।।
मालाधरी ललाटे च भ्रुवौ रक्षेद् यशस्विनी ।
त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।।२२।।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ।
कपोलौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ।।२३।।

---

अग्नि देवता की आग्नेयी शक्ति अग्निकोण में हमारी रक्षा करें ।।१७।। वाराही शक्ति दक्षिणदिशा में, खड्गधारिणी नैर्ऋत्य कोण में, वारुणी शक्ति पश्चिम दिशा में तथा मृग के ऊपर सवार रहने वाली शक्ति वायव्य कोण में हमारी रक्षा करें ।।१८।। भगवान् कार्तिकेय की शक्ति कौमारी उत्तरदिशा में, शूल धारण करने वाली ईश्वरी शक्ति ईशान कोण में, ब्रह्माणी ऊपर तथा वैष्णवी शक्ति नीचे हमारी रक्षा करें ।।१९।। इसी प्रकार शव के ऊपर विराजमान चामुण्डा देवी दसों दिशा में हमारी रक्षा करें। आगे जया, पीछे विजया हमारी रक्षा करें ।।२०।। बायें भाग में अजिता, दाहिने भाग में अपराजिता, शिखा में उद्योतिनी तथा सिर में उमा नियमपूर्वक हमारी रक्षा करें ।।२१।। ललाट में मालाधरी, दोनों भ्रू में यशस्विनी, भ्रू के मध्य में त्रिनेत्रा तथा नासिका में यमघण्टा हमारी रक्षा

नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ।
अधरे चामृतकला जिह्वायां च सरस्वती ।।२४।।
दन्तान् रक्षतु कौमारी कण्ठदेशे तु चण्डिका ।
घण्टिकां चित्रघण्टा च महामाया च तालुके ।।२५।।
कामाक्षी चिबुकं रक्षेद् वाचं मे सर्वमङ्गला ।
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ।।२६।।
नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ।
स्कन्धयोः खड्गिनी रक्षेद् बाहू मे वज्रधारिणी ।।२७।।
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च ।
नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेत् कुलेश्वरी ।।२८।।

---

करें ।।२२।। दोनों नेत्रों के बीच में शंखिनी, दोनों कान के मध्य में द्वारवासिनी, कपोल में कालिका, कर्ण के मूल भाग में शाङ्करी हमारी रक्षा करें ।।२३।। नासिका के बीच का भाग सुगन्धा, ऊपर के ओष्ठ में चर्चिका, अधर (नीचे के ओठ) में अमृतकला तथा जिह्वा में सरस्वती हमारी रक्षा करें ।।२४।। कौमारी दाँतों की, चण्डिका कण्ठ प्रदेश की, चित्रघण्टा गले की तथा महामाया तालु की रक्षा करें ।।२५।। कामाक्षी ठोढ़ी की, सर्वमङ्गला वाणी की, भद्रकाली ग्रीवा की तथा धनुष को धारण करने वाली रीढ़ प्रदेश की रक्षा करें ।।२६।। कण्ठ के बाहर नीलग्रीवा और कण्ठ की नली में नलकूबरी, दोनों कन्धों की खड्गिनी त[illegible] वज्र को धारण करने वाली दोनों बाहु की रक्षा करें ।।२७।। दोनों हाथों में दण्ड को धारण करने वाली दण्डिनी तथा अम्बिका अँगुलियों में हमारी रक्षा करें। शूलेश्वरी नखों की तथा कुलेश्वरी कुक्षिप्रदेश में स्थित होकर हमारी रक्षा करें ।।२८।।

स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी ।
हृदये ललिता देवी उदरे शूलधारिणी ।।२९।।
नाभौ च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा ।
पूतना कामिका मेढ्रं गुदे महिषवाहिनी ।।३०।।
कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ।
जङ्घे महाबला रक्षेत् सर्वकामप्रदायिनी ।।३१।।
गुल्फयोर्नारसिंही च पादपृष्ठे तु तैजसी ।
पादाङ्गुलीषु श्री रक्षेत् पादाधस्तलवासिनी ।।३२।।
नखान् दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ।
रोमकूपेषु कौबेरी त्वचं वागीश्वरी तथा ।।३३।।

महादेवी दोनों स्तन की, शोक को नाश करने वाली शोकविनाशिनी मन की रक्षा करें। ललिता देवी हृदय में तथा त्रिशूलधारिणी उदर प्रदेश में स्थित होकर हमारी रक्षा करें ।।२९।। नाभि में कामिनी तथा गुह्यभाग में गुह्येश्वरी हमारी रक्षा करें। कामिका तथा पूतना लिंग की तथा महिषवाहिनी गुदा में हमारी रक्षा करें ।।३०।।

भगवती कटिप्रदेश में तथा विन्ध्यवासिनी घुटनों की रक्षा करें। सम्पूर्ण कामनाओं को प्रदान करने वाली महाबला जंघा की रक्षा करें ।।३१।। नारसिंही दोनों पैर के घुट्ठियों की, तैजसी देवी दोनों पैर के पिछले भाग की, श्री देवी पैर के अँगुलियों की तथा तलवासिनी पैर के निचले भाग-तलुओं की रक्षा करें ।।३२।। दंष्ट्राकराली (अपनी दाढ़ों के कारण भयंकर दिखाई देने वाली) नखों की, ऊर्ध्वकेशिनी देवी केशों की, कौबेरी (कुबेर की शक्ति) रोमावलि के छिद्रों में तथा बागीश्वरी त्वचा (शरीर के ऊपरी भाग का चमड़ा) में हमारी रक्षा करें ।।३३।।

रक्त-मज्जा-वसा-मांसान्यस्थि-मेदांसि पार्वती ।
अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी ।।३४।।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ।
ज्वालामुखी नखज्वालामभेद्या सर्वसंधिषु ।।३५।।
शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रेश्वरी तथा ।
अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ।।३६।।
प्राणापानौ तथा व्यानमुदानं च समानकम् ।
वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ।।३७।।
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी ।
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ।।३८।।
आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी ।
यशः कीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी ।।३९।।

---

पार्वती देवी रक्त, मज्जा, वसा, मांस, हड्डी और मेदे की रक्षा करें। कालरात्रि आँतों की तथा मुकुटेश्वरी पित्त की रक्षा करें। पद्मावती (मूलाधार में स्थित) सहस्रदल कमल में, चूड़ामणि कफ में, ज्वालामुखी नखराशि में उत्पन्न तेज की तथा अभेद्या (जिसका किसी शस्त्र से भेदन न हो) सभी सन्धियों (जोड़ों) में हमारी रक्षा करें ।।३४-३५।। ब्रह्माणी शुक्र की, छत्रेश्वरी छाया की, धर्म को धारण करने वाली हमारे अहंकार, मन तथा बुद्धि की रक्षा करें ।।३६।। वज्रहस्ता (वज्र को धारण करने वाली) प्राण, अपान, व्यान, उदान तथा समान वायु की, कल्याण से सुशोभित होने वाली कल्याण शोभना हमारे प्राणों की रक्षा करें ।।३७।। रस, रूप, गन्ध, शब्द तथा स्पर्शरूप विषयों का अनुभव करते समय योगिनी तथा

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणां त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वा निधीपतिꣳ हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् स्वाहा ॥१॥

ॐ अम्बे ऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्श्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम् स्वाहा ॥२॥

ॐ आ कृष्णेन रजसा व्वर्त्तमानो निवेशयन्नमृतं मर्त्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥१॥

ॐ इमन्देवा ऽअसपत्नꣳ सुवद्ध्वम्महते क्षत्त्राय महते ज्ज्यैष्ठ्याय महते जानराज्ज्यायेन्द्रस्येन्द्रियाय । इममुमुष्य पुत्त्रममुष्यै पुत्त्रमस्यै व्विश ऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा स्वाहा ॥२॥

ॐ अग्निर्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम् । अपाꣳ रेताꣳसि जिन्वति स्वाहा ॥३॥

उद्बुध्यस्वाग्ने प्प्रतिजागृहि त्त्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च ॥ अस्मिन्त्सधस्थे ऽअद्ध्युत्तरस्मिन् विश्श्वेदेवा यजमानश्च सीदत स्वाहा ॥४॥

ॐ बृहस्पते ऽअति यदर्य्यो ऽअर्हाद्द्युमद्विभाति

क्क्रतुमज्जनेषु । यद्दीदयच्छ्वस ऽऋतप्प्रजात तदस्म्मासु द्रविणं धेहि चित्त्रम् स्वाहा ॥५॥

ॐ अन्नात्परिस्त्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्त्रं पयः सोमं प्रजापतिः । ऋतेन सत्यमिन्द्रियं व्विपानꣳ शुक्क्र-मन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु स्वाहा ॥६॥

ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शं य्योरभिस्त्रवन्तु नः स्वाहा ॥७॥

ॐ कया नश्चित्त्र ऽआभुवदूती सदावृधः सखा । कया शचिष्ठया व्वृता स्वाहा ॥८॥

ॐ केतुं कृण्ण्वन्नकेतवे पेशो मर्य्या अपेशसे । समुषद्भिरजायथाः स्वाहा ॥९॥

ॐ त्र्यम्बकं य्यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् स्वाहा ॥१०॥

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्त्रे पार्श्वे नक्षत्त्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म ऽइषाण सर्व्वलोकम्म ऽइषाण स्वाहा ॥११॥

ॐ यदक्क्रन्दः प्रथमञ्जायमान ऽउद्यन्त्समुद्द्रादुत वापुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातन्ते ऽअर्व्वन् स्वाहा ॥१२॥

ॐ व्विष्णोर्रराटमसि व्विष्णोः श्नप्त्रे स्त्थो

व्विष्ण्णोर्ः स्यूरसि व्विष्ण्णोर्द्ध्रुवोऽसि । व्वैष्ण्णवमसि व्विष्णवे त्वा स्वाहा ॥१३॥

ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्च्चसी जायतामा राष्ट्रे राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायतान्दोग्ग्ध्री धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्ज्जन्न्यो व्वर्षतु फलवत्यो न ऽओषधयः पच्च्यन्तां य्योगक्षेमो नः कल्पताम् स्वाहा ॥१४॥

ॐ सजोषा ऽइन्द्र सगणो मरुद्भिः सोमं पिबतु व्वृत्रहा शूर व्विद्वान् । जहि शत्रूँ२॥ रप मृधो नुदस्वाथाभयङ्कृणुहि व्विश्श्वतो नः स्वाहा ॥१५॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे स्वाहा ॥१६॥

ॐ कार्षिरसि समुद्रस्य त्वाक्षित्त्या ऽउन्नयामि । समापो ऽअद्भिरग्मत समोषधीभिरोषधीः स्वाहा ॥१७॥

ॐ चित्रावसो स्वस्ति ते पारमशीय स्वाहा ॥१८॥

ॐ अग्निन्दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ२॥ ऽआसादयादिह स्वाहा ॥१९॥

ॐ आपो हि ष्ठा मयोभुवस्ता न ऽउर्ज्जे दधातन । महे रणाय चक्षसे स्वाहा ॥२०॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः स्वाहा ॥२१॥

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳪसुरे स्वाहा ॥२२॥

ॐ इन्द्र ऽआसान्नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुर ऽएतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्ग्रम् स्वाहा ॥२३॥

ॐ अदित्यै रास्नासीन्द्राण्ण्या ऽउष्णीषः । पूषासि घर्म्माय दीष्व स्वाहा ॥२४॥

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो ऽअस्त्वयममुष्य पिता-सावस्य पिता व्वयᳪस्याम पतयो रयीणाᳪ स्वाहा ॥२५॥

ॐ नमोऽस्तु सर्प्पेब्भ्यो ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः स्वाहा ॥२६॥

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन ऽआवः । स बुद्ध्न्या ऽउपमा ऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः स्वाहा ॥२७॥

ॐ गणानान्त्वा गणपतिᳪ हवामहे प्प्रियाणान्त्वा प्प्रियपतिᳪ हवामहे निधीनान्त्वा निधिपतिᳪ हवामहे व्वसो मम । आहमजानि गर्ब्भधमात्त्वमजासि गर्ब्भधम् स्वाहा ॥२८॥

ॐ अम्बे ऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् स्वाहा ॥२९॥

ॐ व्वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ॥३०॥

ॐ घृतङ्घृतपावानः पिबत व्वसां व्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्प्रदिश ऽआदिशो व्विदिश ऽउद्दिशो दिग्भ्यः स्वाहा ॥३१॥

ॐ या वाङ्कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् स्वाहा ॥३२॥

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शंचतुष्पदे स्वाहा ॥३३॥

ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽ एतारमग्नेः ॥ एमेनमवृधन्नमृताऽमर्त्यव्वैश्वानरङ्क्षैत्रजित्याय देवाः स्वाहा ॥३४॥

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा ॥३५॥

ॐ त्वन्नो ऽअग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च व्वन्द्य । त्राता तोकस्य तनये गवामस्य

निमेषꣳ रक्षमाणस्तव व्व्रते स्वाहा ॥३६॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे स्वाहा ॥३७॥

ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा त ऽइत्या नमो देवि निर्ऋते तुब्भ्यमस्तु स्वाहा ॥३८॥

ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोद्ध्युरुशꣳस मा न ऽआयुः प्रमोषीः स्वाहा ॥३९॥

ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । व्वायो ऽअस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥४०॥

ॐ व्वयꣳ सोम व्व्रते तव मनस्तनूषु बिब्भ्रतः । प्रजावन्तः सचेमहि स्वाहा ॥४१॥

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे व्वयम् । पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये स्वाहा ॥४२॥

ॐ अस्मे रुद्रा मेहना पर्वतासो व्वृत्रहत्ये भरहूतौ सजोषाः । यः शꣳसते स्तुवते धायि वज्र ऽइन्द्रज्ज्येष्ठा अस्माँ२॥ ऽअवन्तु देवाः स्वाहा ॥४३॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्रथाः स्वाहा ॥४४॥

इति मन्त्रैरावाहितदेवानां हवनं कुर्यात् ।

इति दुर्गार्चनपद्धतौ आवाहितदेवानां हवनं समाप्तम् ।

## प्रधानहवनम्

### (दुर्गासप्तशती पाठ हवनम्)

ततः 'सावर्णिः सूर्यतनयो०' इत्यारभ्य 'सावर्णिर्भविता मनुः' इत्यन्तं प्रतिमन्त्रं हवनीयद्रव्येण जुहुयात् ।

## सर्वतोभद्रमण्डलदेवतानां हवनम्

ततः प्रधानहोमानन्तरं ब्रह्मादि-सर्वतोभद्रमण्डलदेवताश्च एकैकयाऽऽज्याहुत्या जुहुयात् । तद्यथा-

१. ब्रह्मणे नमः स्वाहा ।
२. सोमाय नमः स्वाहा ।
३. ईशानाय नमः स्वाहा ।
४. इन्द्राय नमः स्वाहा ।
५. अग्नये नमः स्वाहा ।
६. यमाय नमः स्वाहा ।
७. निर्ऋतये नमः स्वाहा ।
८. वरुणाय नमः स्वाहा ।
९. वायवे नमः स्वाहा ।
१०. अष्टवसुभ्यो नमः स्वाहा ।

प्रधान (दुर्गासप्तशती पाठ) हवन – तत्पश्चात् 'सावर्णिः सूर्यतनयो०' यहाँ से आरम्भ कर 'सावर्णिर्भविता मनुः' तक प्रत्येक मन्त्रों द्वारा हवनीय द्रव्य से एक-एक आहुति प्रदान करें।

इस प्रकार 'शिवदत्ती' हिन्दीव्याख्या सहित दुर्गार्चन-पद्धति में प्रधान हवन समाप्त।

सर्वतोभद्रमण्डल स्थित देवताओं का हवन – तत्पश्चात् प्रधान हवन के बाद ब्रह्मादि सर्वतोभद्र मण्डल देवताओं के लिए 'ब्रह्मणे नमः

११. एकादशरुद्रेभ्यो नमः स्वाहा ।
१२. द्वादशादित्येभ्यो नमः स्वाहा ।
१३. अश्विभ्यां नमः स्वाहा ।
१४. सपैतृकविश्वेभ्यो देवेभ्यो नमः स्वाहा ।
१५. सप्तयक्षेभ्यो नमः स्वाहा ।
१६. अष्टकुलनागेभ्यो नमः स्वाहा ।
१७. गन्धर्वाऽप्सरोभ्यो नमः स्वाहा ।
१८. स्कन्दाय नमः स्वाहा ।
१९. नन्दीश्वराय नमः स्वाहा ।
२०. शूलाय नमः स्वाहा ।
२१. महाकालाय नमः स्वाहा ।
२२. दक्षादि-सप्तप्रजापतिभ्यो नमः स्वाहा ।
२३. दुर्गायै नमः स्वाहा ।
२४. विष्णवे नमः स्वाहा ।
२५. स्वधासहितपितृभ्यो नमः स्वाहा ।
२६. मृत्युरोगाभ्यां नमः स्वाहा ।
२७. गणपतये नमः स्वाहा ।
२८. अद्भ्यो नमः स्वाहा ।
२९. मरुद्भ्यो नमः स्वाहा ।
३०. पृथिव्यै नमः स्वाहा ।
३१. गङ्गादिनदीभ्यो नमः स्वाहा ।
३२. सप्तसागरेभ्यो नमः स्वाहा ।
३३. मेरवे नमः स्वाहा ।
३४. गदायै नमः स्वाहा ।
३५. त्रिशूलाय नमः स्वाहा ।
३६. वज्राय नमः स्वाहा ।
३७. शक्तये नमः स्वाहा ।
३८. दण्डाय नमः स्वाहा ।
३९. खड्गाय नमः स्वाहा ।
४०. पाशाय नमः स्वाहा ।
४१. अङ्कुशाय नमः स्वाहा ।
४२. गौतमाय नमः स्वाहा ।
४३. भरद्वाजाय नमः स्वाहा ।
४४. विश्वामित्राय नमः स्वाहा ।
४५. कश्यपाय नमः स्वाहा ।
४६. जमदग्नये नमः स्वाहा ।
४७. वशिष्ठाय नमः स्वाहा ।
४८. अत्रये नमः स्वाहा ।
४९. अरुन्धत्यै नमः स्वाहा ।
५०. ऐन्द्रयै नमः स्वाहा ।
५१. कौमार्यै नमः स्वाहा ।
५२. ब्राह्मयै नमः स्वाहा ।
५३. वाराह्यै नमः स्वाहा ।
५४. चामुण्डायै नमः स्वाहा ।
५५. वैष्णव्यै नमः स्वाहा ।
५६. माहेश्वर्यै नमः स्वाहा ।
५७. वैनायक्यै नमः स्वाहा ।

इति सर्वतोभद्रमण्डलदेवताहवनं समाप्तम् ।

स्वाहा' से 'वैनायक्यै नमः स्वाहा' तक पढ़कर घी की एक-एक आहुति देवे ।

# स्विष्टकृत्-हवनम्

अग्निपूजनम्

तद्यथा–ॐ अग्ने नय सुपथा राये ऽअस्मान् विश्वानि देव व्वयुनानि व्विद्वान् । युयोध्यस्म्मज्जुहुराणमेनो भूयिष्ठां ते नम ऽउक्तिं व्विधेम ॥

'ॐ स्वाहा-स्वधायुताग्नये वैश्वानराय नमः' इत्यनेनाऽग्निं सम्पूजयेत् ।

इत्यग्निपूजनम् ।

ततो हुतशेषहविर्द्रव्यं गृहीत्वा, ब्रह्मणान्वारब्धः स्विष्टकृद्होमं कुर्यात् । ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम । इति हुताशेषाऽऽज्यस्य प्रोक्षणीपात्रे प्रक्षेपः ।

# भूरादिनवाहुतिप्रदानम्

ततो भूराद्या नवाहुतयः कुर्युः । तद्यथा–ॐ भूः

---

स्विष्टकृत् हवन (अग्निपूजन)– तदनन्तर प्राप्त उपचार द्रव्यों से अग्नि का पूजन करे। वह इस प्रकार है-'ॐ अग्ने नय सुपथा०' यह मन्त्र तथा 'ॐ स्वाहा-स्वधायुताग्नये वैश्वानराय नमः' इसको पढ़कर अग्नि की पूजा करे। तथा 'ॐ अग्नये स्विष्टकृते स्वाहा' पढ़कर आहुति देने से शेष बचे हुए साकल का हवन करे। पश्चात् 'इदमग्नये स्विष्टकृते न मम' कहकर स्रुवा में बचे हुए घृत को प्रोक्षणीपात्र में छोड़ दे।

*इस प्रकार स्विष्टकृत-हवन समाप्त।*

स्वाहा । इदमग्नये न मम । ॐ भुवः स्वाहा । इदं वायवे न मम । ॐ स्वः स्वाहा । इदं सूर्याय न मम ।

ॐ त्वन्नोऽअग्ग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्श्वा द्वेषाᳬसि प्प्रमुमुग्ध्यस्म्मत् स्वाहा ॥

इदमग्नीवरुणाभ्यां न मम ।

ॐ स त्वन्नो ऽअग्ग्नेऽवमो भवोती नेदिष्ठो ऽअस्या उषसो व्व्युष्टौ । अवयक्ष्व नो व्वरुणᳬ ररांणो व्वीहि मृडीकᳬ सुहवो न ऽएधि स्वाहा ॥

इदमग्नीवरुणाभ्यां न मम ।

ॐ अयाश्श्चाग्ग्नेऽस्यनभिशस्तिपाश्श्च सत्य-मित्त्वमया ऽअसि । अयानो यज्ञं व्वहास्ययानो धेहि भेषजᳬ स्वाहा ॥

इदमग्ने अयसे न मम ।

ॐ ये ते शतं व्वरुण ये सहस्त्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्न्नो ऽअद्य सवितोत व्विष्णुर्व्विश्श्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ।

भूरादिनवाहुतिप्रदान – इसके बाद 'ॐ भूः स्वाहा' आदि नव आहुति देवे। वह इस प्रकार है-'ॐ भूः स्वाहा' से लेकर 'इदं

ॐ उदुत्तमं व्वरुण पाशमस्म्मदवाधमं व्विमध्यमꣳ श्श्रथाय । अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम स्वाहा ।

इदं वरुणादित्यायाऽदितये न मम । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

इति भूरादिनवाहुतिप्रदानम् ।

## एकतन्त्रेण दिक्पालादीनां बलिदानम्

ततो दिक्पालेभ्य एकतन्त्रेणैकमेव बलिं दद्यात् । तद्यथा-

ॐ प्राच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा प्प्रतीच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहार्व्वाच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहार्व्वाच्यै दिशे स्वाहा ॥

'इन्द्रादि-दशदिक्पालेभ्यो नमः', 'देयबलये नमः' इत्यनेन च गन्धा-ऽक्षत-पुष्पैः बलिं सम्पूज्य, पुनः हस्ते जलं गृहीत्वा, इन्द्रादि-दशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः

---

प्रजापतये न मम' तक पढ़कर प्रत्येक मन्त्रों द्वारा क्रमशः घी की आहुति प्रदान करे। शेष बचे हुए घी को प्रोक्षणी पात्र में छोड़ें।

एकतन्त्र से इन्द्रादि दशदिक्पालों का बलिदान – तदनन्तर एकतन्त्र से 'ॐ प्राच्यै दिशे स्वाहा०' से 'इन्द्रादि-दशदिक्पालेभ्यो नमः' पर्यन्त मन्त्र-वाक्य उच्चारण कर नमस्कार पूर्वक इन्द्रादि दशदिक्पालों की

सायुधेभ्यः स-शक्तिकेभ्यः एतान् सदीप-दधि-माष-भक्त-बलीन् समर्पयामि ।

प्रार्थना– भो भो इन्द्रादि-दशदिक्पालाः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टि-कर्तारः वरदा भवत ।

ततो हस्तेजलं गृहीत्वा, अनेन बलिदानेन इन्द्रादि-दश-दिक्पालाः प्रीयन्ताम् । एवं प्रकारेण सर्वेभ्यो ग्रहेभ्यो एक-तन्त्रेणैकमेव बलिं दद्यात् । तद्यथा–

ॐ ग्रहा ऽऊर्ज्जाहुतयो व्यन्तो विप्प्राय मतिम् । तेषां विशिप्प्रियाणां वोऽहमिषमूर्ज्जꣳ समग्ग्रभमुपयामगृहीतोऽसीन्द्रायत्वा जुष्टं गृह्णा-म्येष ते योनिरिन्द्रायत्त्वा जुष्टतमम् ॥

'सूर्यादिनवग्रहेभ्यो नमः' इति सम्पूज्य, हस्ते जलं

---

पूजा करें। पश्चात् हाथ में जल लेकर 'इन्द्रादि-दशदिक्पालेभ्यः साङ्गेभ्यः स-परिवारेभ्यः०' से लेकर 'स-दीप-दधि-माष-भक्त-बलीन् समर्पयामि' तक पढ़कर इन्द्रादि दशदिक्पालों के लिए बलि समर्पण कर जल छोड़ दे।

पुनः 'भो भो इन्द्रादि-दशदिक्पालाः०' से 'वरदा भवत' तक पढ़ कर हाथ जोड़कर इन्द्रादि दशदिक्पालों की प्रार्थना करे। फिर हाथ में जल लेकर, 'अनेन बलिदानेन इन्द्रादि-दशदिक्पालाः प्रीयन्ताम्' वाक्य पढ़कर जल गिरा दे।

इसी प्रकार सभी ग्रहों के लिए एक तन्त्र से एक ही बलि देवे।

गृहीत्वा, सूर्यादिनवग्रहेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवता-प्रत्यधिदेवता-गणपत्यादि-पञ्चलोकपाल-वास्तोष्पतिसहितेभ्यः एतं स-दीप-दधि-माष-भक्तबलिं समर्पयामि ।

प्रार्थना—भो भो सूर्यादिग्रहाः ! साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः अधिदेवता-प्रत्यधिदेवता-गणपत्यादि-पञ्चलोकपाल-वास्तोष्पतिसहिताः मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः वरदा भवत ।

हस्ते जलं गृहीत्वा, अनेन बलिदानेन साङ्गाः सूर्यादि-नवग्रहाः प्रीयन्ताम् ।

*इत्येकतन्त्रेण दिक्पालादीनां बलिदानम् ।*

# कूष्माण्डबलिदानम्

आचम्य, प्राणानायम्य । देशकालाद्युच्चार्य० मम-

जैसे—'ॐ ग्रहा ऊर्ज्जाहुतयो०' से 'सूर्यादिनवग्रहेभ्यो नमः' तक मन्त्र-वाक्य पढ़कर सूर्यादि नवग्रह देवताओं की पूजा कर, हाथ में जल लेकर, 'सूर्यादिनवग्रहेभ्यः साङ्गेभ्यः०' से 'स-दीप-माष-भक्त-बलिं समर्पयामि' पर्यन्त वाक्य कह बलि देकर जल छोड़ दे।

प्रार्थना-पुनः 'भो भो सूर्यादिग्रहाः साङ्गाः०' से लेकर 'वरदा भवत' तक वाक्य पढ़कर सूर्यादि नवग्रहों की प्रार्थना करें। तथा हाथ में जल लेकर 'अनेन बलिदानेन०' कहकर भूमि पर जल छोड़ दे।

*इस प्रकार 'शिवदत्ती' हिन्दी व्याख्या सहित दुर्गार्चनपद्धति में एकतन्त्र से इन्द्रादि-दशदिक्पालादि का बलिदान समाप्त।*

सकुटुम्बस्य सर्वाऽरिष्ट-प्रशान्ति-सर्वाभीष्ट-कामसिद्धि-कल्पोक्तफलावाप्तिद्वारा श्रीमहाकाली-महालक्ष्मी-महासरस्वती-त्रिगुणात्मिकास्वरूपिणी-श्रीदुर्गादेवीप्रीत्यर्थं कूष्माण्डबलिदानं करिष्ये। तदङ्गत्वेन पञ्चोपचारैः[1] बलिपूजनं च करिष्ये। तत्पश्चात्-

'नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥

इत्यनेन दुर्गादेवीं पञ्चोपचारैः सम्पूज्य, तत्पुरतः स्वयमुदङ्मुखो बलिं प्राङ्मुखं च पीठे वस्त्रगुण्ठितं कूष्माण्डं निधाय, 'कूष्माण्डबलये नमः' इत्यनेन गन्ध-पुष्पादि-पञ्चोपचारैः सम्पूज्य, अभिमन्त्रयेत्।

पशुस्त्वं बलिरूपेण मम भाग्यादवस्थितः।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्॥१॥

---

कूष्माण्डबलिदान—यजमान आचमन और प्राणायाम कर, दाहिने हाथ में अक्षत, पुष्प एवं द्रव्य लेकर 'देशकालाद्युच्चार्य० कूष्माण्डबलिदानं करिष्ये' एवं 'तदङ्गत्वेन०' से 'बलिपूजनं च करिष्ये' तक पढ़कर संकल्प करे।

तदनन्तर 'नमो देव्यै महादेव्यै०' इस मन्त्र से दुर्गा देवी का पंचोपचार द्वारा पूजन कर, मूर्ति के आगे यजमान उत्तरमुख हो कपड़ा लपेटकर, उस कूष्माण्डबलि को पूर्वमुख करके प्रधान वेदी

---

१. पञ्चोपचाराः—

गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च।
प्रदद्यात् परमेशानि! पूजा पञ्चोपचारिका:॥

चण्डिकाप्रीतिदानेन दातुरापद्-विनाशनम्।
चामुण्डाबलिरूपाय बले! तुभ्यं नमोऽस्तु ते ॥२॥
यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयम्भुवा।
अतस्त्वां घातयाम्यद्य यस्माद्यज्ञे मतोबधः ॥३॥

ततः शस्त्रं गन्धादिना सम्पूज्य, अभिमन्त्रयेत्—ऐं ह्रीं श्रीं। 'रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः।' इति। ह्रां ह्रीं खड्ग, आं, हुं, फट्, इति पठित्वा, हस्ते शस्त्रं गृहीत्वा, वीरासनमुद्रया 'ॐ कालि कालि वज्रेश्वरि लोहदण्डायै नमः' इति पठनेन कूष्माण्डं छेदयेत्। छेदनावसरे न विलोकयेत्। ततश्छिन्ने बलौ कुङ्कुम-मनुलेपयेत्। 'कौशिकि रुधिरेणाप्यायताम्' इति देव्यै अर्धं निवेद्य, अवशिष्टार्धस्य तेनैव खड्गेन पुनः पञ्चभागान् कृत्वा पूतनायै बलिभागं निवेदयामि, चरक्यै बलिभागं

---

पर रखे। तथा 'कूष्माण्डबलये नमः' से गन्ध, पुष्प आदि पंचोपचार से पूजन कर, उसे 'पशुस्त्वं बलिरूपेण०' से लेकर 'यस्माद्यज्ञे मतोबधः' तक पढ़कर अभिमन्त्रित करे।

उसके बाद गन्ध-पुष्पादि से शस्त्र की पूजाकर 'ऐं ह्रीं श्रीं०' से 'सुरलोकप्रसाधकः' मन्त्र पढ़कर उस पर जल छिड़के, और 'ह्रां ह्रीं खड्ग, आं हुं फट्' मन्त्र पढ़कर हाथ में तीक्ष्ण शस्त्र ले वीरासन मुद्रा से बैठकर 'ॐ कालि कालि०' पढ़ते हुए बलि का छेदन करे। छेदन के समय उसको देखना निषेध है। पुनः छिन्न की (कटी) हुई बलि पर रोली लगावे। 'कौशिकि रुधिरेणाप्यायताम्' कहकर बलि का आधा हिस्सा देवी को निवेदन करे, एवं आधे

निवेदयामि, विदार्यै बलिभागं निवेदयामि। पापराक्षस्यै बलिभागं निवेदयामि। क्षेत्रपालं बलिभागं निवेदयामि।

*इति कूष्माण्डबलिदानं समाप्तम्।*

# क्षेत्रपालबलिदानम्

एकस्मिन् वंशादिपात्रे कुशानास्तीर्य तदुपरि मनुष्याहारचतुर्गुणं द्विगुणं वा माष-दध्योदनं जलपात्रं च निधाय, चतुर्मुखं दीपं प्रज्वाल्य, हरिद्रा-कुङ्कुमादि-पतायुतं कृत्वा,

ॐ नहि स्प्पशमविदन्नन्यमस्म्माद् वैश्श्वानरात्पुर ऽएतारमग्ग्नेः। एमैनमवृधन्नमृता ऽअमर्त्त्यं व्वैश्श्वानरं क्षैत्त्रजित्त्याय देवाः॥

'क्षेत्रपालाय नमः' इति पञ्चोपचारैः षोडशोपचारैर्वा सम्पूज्य, प्रार्थयेत् -

नमो वै क्षेत्रपालस्त्वं भूत-प्रेतगणैः सह।
पूजाबलिं गृहाणेमं सौम्यो भवतु सर्वदा॥१॥

---

में पाँच भाग कर 'पूतनायै बलिभागं निवेदयामि०' से 'क्षेत्रपालं बलिभागं निवेदयामि' पर्यन्त पढ़कर निवेदन करें।

*इस प्रकार कूष्माण्डबलिदान समाप्त।*

क्षेत्रपालबलिदान—बाँस की बनी डलिया आदि, पत्तल पर कुशा बिछाकर, उस पर एक व्यक्ति के भोजन से चौगुना, दोगुना या यथाशक्ति प्रमाण उड़द, दही मिश्रित चावल और जल पात्र रखकर, उसमें चतुर्मुख दीप जलाकर, हल्दी, रोली, सिन्दूर और लाल पुष्प युक्त बलि रख, 'ॐ नहि स्पशमविदन्नन्यमस्माद्०' मन्त्र तथा

पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ।
आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा ।।२।।

ततो बलिदानम् । हस्ते जलं गृहीत्वा, क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय स-शक्तिकाय मारीगण-भैरव-राक्षस-कूष्माण्ड-वेताल-भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-पिशाचिनी-गणसहिताय एतं स-दीप-दधि-माष-भक्तबलिं समर्पयामि ।

प्रार्थना— भो क्षेत्रपाल ! क्षेत्रं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता: क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता वरदो भव ।

पुनर्हस्ते जलं गृहीत्वा, अनेन बलिदानेन क्षेत्रपालः प्रीयताम् । यजमानस्य मस्तकोपरि सकृद्भ्रामयित्वा, शूद्रेण बलिं गृहीत्वा, चतुष्पथे निक्षिपेत् ।

ततो यजमानस्तस्य पृष्ठतो द्वारपर्यन्तं गत्वा, 'ॐ

---

'क्षेत्रपालाय नमः' वाक्य पढ़कर पंचोपचार या षोडशोपचार से पूजन कर 'नमो वै क्षेत्रपालस्त्वं०' से 'निर्विघ्नं कुरु सर्वदा' पर्यन्त श्लोक पढ़कर प्रार्थना करे ।

तदनन्तर हाथ में जल लेकर 'क्षेत्रपालाय साङ्गाय०' से 'बलिं समर्पयामि' तक पढ़कर क्षेत्रपाल के लिए बलि समर्पण कर, 'भो क्षेत्रपाल ! क्षेत्रं रक्ष०' से 'वरदो भव' तक पढ़कर प्रार्थना करे ।

इसके बाद हाथ में जल लेकर 'अनेन बलिदानेन०' वाक्य कहकर शूद्र आदि निकृष्ट जाति द्वारा उस वंश पात्र को यजमान के मस्तक पर घुमाकर चौराहे पर रखवा दे ।

हिङ्काराय स्वाहा०' इति पठित्वा जलं क्षिपेत्। तन्मन्त्रम्—

ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धायस्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृताय स्वाहा सꣳहानाय स्वाहोपस्थिताय स्वाहाऽयनाय स्वाहा प्रायणाय स्वाहा ॥

*इति क्षेत्रपालबलिदानम् ।*

# पूर्णाहुतिः

ततो यजमानः पाणिपादं प्रक्षाल्याऽऽचमनं कुर्यात् । पश्चात् नारिकेलफलं रक्तवस्त्रवेष्टितं द्वादशषट्चतुःस्रुवेण गृहीतमाज्यं स्रुच्यां कृत्वा तस्योपरि नारिकेलफलं संस्थाप्य, 'ॐ पूर्णाहुत्यै नमः' इति षोडशोपचारैः सम्पूज्य, 'ॐ

---

तत्पश्चात् यजमान ले जाने वाले के पीछे-पीछे द्वार तक जाकर 'ॐ हिंकाराय स्वाहा०' से 'प्राणाय स्वाहा' तक मन्त्र पढ़कर जल गिरा दे। पश्चात् यजमान अपने दोनों हाथ एवं पैर प्रक्षालन करे।

*इस प्रकार क्षेत्रपाल बलिदान समाप्त।*

पूर्णाहुति—तत्पश्चात् नारियल को लाल वस्त्र में लपेटकर बारह, छह या चार बार स्रुवा से घी निकाल कर, स्रुची में रख, उसके

समुद्रदूर्मिर्मधुमां०' इत्यारभ्य 'अग्नयेऽद्भ्यश्च न मम' इत्यन्तं पठित्वा, पूर्णाहूतिं जुहुयात्, तत्र मन्त्राः—

ॐ समुद्राद्दूर्म्मिर्म्मधुमाँ२॥ ऽउदारदुपाᳬंशुना सममृतत्त्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः॥१॥ वयन्नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः। उप ब्रह्माशृणवच्छस्यमानञ्चतुः शृङ्गोऽवमीद् गौर ऽएतत्॥२॥ चत्त्वारि शृङ्गा त्रयो ऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२॥ ऽआविवेश॥३॥ त्रिधा हितं पणिभिर्गुह्यमानंगवि देवासो घृतमन्वविन्दन्। इन्द्र ऽएकᳬं सूर्य्य ऽएकञ्जजान वेनादेकᳬं स्वधया निष्टतक्षुः॥४॥ एता ऽअर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धारा ऽअभिचाकशीमि हिरण्ययो वेतसो मद्ध्य ऽआसाम्॥५॥ सम्म्यक् स्रवन्ति सरितो न धेना ऽअन्तर्हृदा मनसा पूयमानाः। एते ऽअर्षन्त्यूर्म्मयो घृतस्य मृगा ऽइव क्षिपणोरीषमाणाः॥६॥ सिन्धोरिव प्राद्ध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा ऽअरुषो

---

ऊपर नारियल के गोला को स्थापित कर 'ॐ पूर्णाहुत्यै नमः' कहकर षोडशोपचार द्वारा पूजन कर 'ॐ समुद्रादूर्मिर्मधुमाँ०' से

न व्वाजी काष्ठा भिन्दन्नूर्म्मिभिः पिन्न्वमानः ॥७॥
अभिप्प्रवन्त समनेव योषाः कल्ल्याण्ण्यः स्म्मयमानासो
ऽअग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो
हर्य्यति जातवेदाः ॥८॥ कन्न्या ऽइव व्वहतुमेतवा ऽउ
ऽअञ्ज्यञ्जाना ऽअभिचाकशीमि । यत्र सोमः सूयते
यत्र यज्ञो घृतस्य धारा ऽअभि तत्पवन्ते ॥९॥ अब्भ्यर्षत
सुष्टुतिङ्गव्व्यमाजिमस्म्मासु भद्द्रा द्रविणानि धत्त । इमं
य्यज्ञन्नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥१०॥
धामन्ते व्विश्श्वं भुवनमधि शिश्रतमन्तः समुद्द्रे हृद्द्यन्तरा-
युषि । अपामनीके समिथे य ऽआभृतस्तमश्याम मधु-
मन्तन्त ऽऊर्म्मिम् ॥११॥ पुनस्त्वाऽऽदित्या रुद्द्रा व्वसवः
समिन्धतां पुनर्ब्ब्रह्माणो व्वसुनीथ यज्ञैः । घृतेन त्वन्तन्न्वं
व्वर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः ॥१२॥
सप्त ते ऽअग्ग्ने समिधः सप्प्त जिह्वाः सप्प्त ऽऋषयः सप्प्त
धाम प्प्रियाणि । सप्प्त होत्राः सप्प्तधा त्त्वा यजन्ति
सप्प्त योनीरापृणस्व घृतेन स्वाहा ॥१३॥ मूर्द्धानं दिवो
ऽअरतिं पृथिव्व्या व्वैश्श्वानरमृत ऽआ जातमग्निम् । कविᳫं
सम्म्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥१४॥
पूर्ण्णा दर्व्वि परापत सुपूर्ण्णा पुनरापत । व्वस्नेव
व्विक्क्रीणावहा ऽइषमूर्ज्जᳫं शतक्क्रतो स्वाहा ॥१५॥

अथवा- नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।।

'इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च न मम' इति प्रोक्षणीपात्रे स्रुवाऽवशिष्टं घृतं त्यजेत् ।

*इति पूर्णाहुतिः समाप्ता ।*

# वसोर्धाराहोमः

ततः 'ॐ सप्त ते अऽग्ने०' इत्यारभ्य 'सुप्वा कामधुक्षः स्वाहा' इत्यन्तं वसोर्धारां जुहुयात् । तत्र मन्त्राः—

ॐ सप्त तेंऽअग्ग्ने समिधः सप्त जिह्वाः सप्त ऽऋषयः सप्त धामप्प्रियाणि । सप्त होत्राः सप्तधा त्त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥१॥ शुक्रज्ज्योतिश्श्च चित्त्रज्ज्योतिश्च सत्त्यज्ज्योतिश्च ज्ज्योतिष्म्माँश्च । शुक्रश्श्चऽऋतपाश्चात्यंहाः ॥२॥ ईदृङ् चान्न्यादृङ् च सदृङ् चप्प्रतिसदृङ् च । मितश्श्च सम्मितश्च्च सभराः ॥३॥ ऋतश्श्च सत्यश्च्च ध्रुवश्च्च धरुणश्श्च । धर्त्ता च विधर्त्ता च विधारयः ॥४॥

---

'शतक्रतो स्वाहा' पर्यन्त पढ़कर या 'नमो देव्यै०' से पूर्णाहुति हवन करे। तदनन्तर स्रुवे से बचे हुए घृत का 'इदमग्नये वैश्वानराय०' से 'अद्भ्यश्च न मम' पर्यन्त पढ़कर प्रणीता पात्र में परित्याग करे।

**वसोर्धाराहोम**-तत्पश्चात् 'ॐ सप्त ते अग्ने०' से 'कामधुक्षः

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च । अन्तिमित्रश्च दूरे ऽअमित्रश्च गणः ॥५॥ ईदृक्षास ऽएतादृक्षास ऽऊषुणः सदृक्षासः प्रतिसदृक्षास ऽएतन । मितासश्च सम्मितासो नो ऽअद्य सभरसो मरुतो यज्ञे ऽअस्मिन् ॥६॥ स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च । क्रीडी च शाकी चोज्जेषी ॥७॥ इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् । एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥८॥ इमꣳ स्तनमूर्जस्वन्तन्धयापां प्रपीनमग्ने सरिरस्य मध्ये । उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व ॥९॥ घृतम्मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्ष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् । वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥१०॥

इदमग्नये वैश्वानराय न मम ।

---

स्वाहा' तक पढ़कर स्रुचि द्वारा अविच्छिन्न घृतधारा अग्नि में दे । पश्चात् 'इदमग्नये वैश्वानराय न मम' पढ़कर शेष घृत को प्रणीता

अग्नि-प्रार्थना

श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् ।
तेजं आयुष्यमारोग्यं देहि मे हव्यवाहन ! ।।१।।
भो भो अग्ने ! महाशक्ते ! सर्वकर्मप्रसाधन ! ।
कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सर्वदा ।।२।।

*इति वसोर्धाराहोमः ।*

## त्र्यायुषकरणम्

**ततोऽग्निं प्रदक्षिणीकृत्य, पश्चिमदेशे प्राङ्मुख उपविश्य, स्रुवेण भस्मानीय अनामिकया—**

**'ॐ त्र्यायुषं जमदग्नेः' इति ललाटे । 'कश्यपस्य त्र्यायुषम्' इति ग्रीवायाम् । 'यद्देवेषु त्र्यायुषम्' इति दक्षिणबाहुमूले । 'तन्नो ऽअस्तु त्र्यायुषम्' इति हृदि ।**

**ततः प्रोक्षणीपात्रे प्रक्षिप्तस्याऽऽज्यस्य संस्रवप्राशनं**

---

पात्र में छोड़े । इसके बाद 'श्रद्धां मेधां०' से 'कुरु सर्वदा' तक पढ़कर अग्नि की प्रार्थना करे ।

त्र्यायुषकरण—इसके बाद अग्नि की प्रदक्षिणा कर, अग्नि के पश्चिम भाग में अर्थात् अग्नि के पीछे पूर्व मुख बैठकर स्रुवा द्वारा कुण्ड में से भस्म निकालकर अनामिका अँगुलि से यजमान के 'ॐ त्र्यायुषं जमदग्नेः०' से ललाट, 'कश्यपस्य त्र्यायुषम्' से ग्रीवा (गले), 'यद्देवेषु त्र्यायुषम्' से दाहिने बाहु और 'तन्नो अस्तु त्र्यायुषम्' से हृदय में भस्म लगावे ।

तत्पश्चात् प्रोक्षणी पात्र में स्थित घृत को यजमान सूँघे । आचमन

यजमानं कुर्यात् । पश्चादाचमनं, पवित्राभ्यां मार्जनम्, अग्नौ पवित्रप्रतिपत्तिश्च कर्त्तव्या ।

*इति त्र्यायुषकरणम् ।*

# पूर्णपात्रदानम्

अद्य कृतस्य दुर्गार्चनहोमकर्मणोऽङ्गतया विहितमिदं पूर्णपात्रं स-दक्षिणं ब्रह्मणे[1] तुभ्यमहं सम्प्रददे । 'ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ।' अग्नेः पश्चात् प्रणीताविमोकः कुर्यात् ।

'ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तुभेषजम् ।' इति मन्त्रेण सकुटुम्बं यजमानम् उपयमनकुशैर्मार्जयेत् । उपयमनकुशानामग्नौ प्रक्षेपः । ब्रह्म-ग्रन्थिविमोकः ।

*इति पूर्णपात्रदानम् ।*

---

करे। प्रणीता पात्र में रखी हुई पवित्री से प्रणीता जल को अपने मस्तक पर छिड़के। तथा उन दोनों कुशाओं को अग्नि में छोड़ दे।

*इस प्रकार त्र्यायुषकरण समाप्त।*

पूर्णपात्रदान—इसके बाद यजमान 'अद्य कृतस्य दुर्गार्चन-होम-कर्मणोऽङ्गतया०' यह संकल्प-वाक्य पढ़कर ब्रह्मा के लिए पूर्णपात्र का संकल्प करे। ब्रह्मा 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु, यह वाक्य पढ़े। अग्नि के पीछे जलयुक्त पात्र को उलट दे।

तदनन्तर प्रणीतापात्र से गिरे हुए जल को 'ॐ आपः शिवाः

---

१. ब्रह्मवैवर्ते- अकृते पूर्णपात्रे तु यज्ञच्छिद्रं समुद्भवेत् ।
तस्मिन् पूर्णे कृते विप्र ! यज्ञ-सम्पूर्णतां भवेत् ॥

# श्रेयोदानम्

ततः आचार्यः श्रेयोदानं कुर्यात्। तद्यथा-अद्येत्यादि-कृतस्य दुर्गार्चनाख्यस्य कर्मणो यजमानाय श्रेयोदानं करिष्ये। भवन्नियोगेन मया अस्मिन् दुर्गार्चनाख्ये कर्मणि यत्कृतम् आचार्यत्वं तदुत्पन्नं श्रेयः तत् अमुना साक्षतेन सजलेन पूंगीफलेन तुभ्यमहं सम्प्रददे। प्रतिगृह्यताम्। 'देवस्यत्वे'ति प्रतिगृह्णामि। तेन श्रेयसा त्वं श्रेयोवान् भव। 'भवामी'ति तेन वाच्यम्।

*इति श्रेयोदानम्।*

# दक्षिणासङ्कल्पः

अद्य कृतस्य दुर्गार्चनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्ण-फलप्राप्त्यर्थं च आचार्यादिभ्यो महर्त्विग्भ्यः सूक्तपाठकेभ्यो मन्त्रजापकेभ्यो हवनकर्तृभ्योऽन्येभ्यश्च दक्षिणां विभज्य दातुमहमुत्सृजे।

*इति दक्षिणासङ्कल्पः।*

---

शिवतमा:०' से 'कृण्वन्तु भेषजम्' इस मन्त्र द्वारा उपयमन कुशाओं से परिवार सहित यजमान के मस्तक पर मार्जन करे और उपयमन कुशाओं को अग्नि में छोड़ दे। पश्चात् ब्रह्मा कुशनिर्मित ब्रह्मग्रन्थि को खोल दे।

श्रेयोदान–तदनन्तर आचार्य दुर्गार्चन कर्म का श्रेयोदान (आशीर्वाद प्रदान) करे। वह इस प्रकार है-आचार्य हाथ में जल, अक्षत और सुपारी लेकर 'अद्येत्यादि कृतस्य०' से 'तेन श्रेयसात्वं श्रेयोवान् भव' तक पढ़कर यजमान को दे। 'देवस्य त्वा०' मन्त्र से यजमान ग्रहण करे।

# ब्राह्मणभोजनसङ्कल्पः

**ततो ब्राह्मणभोजनसङ्कल्पं कुर्यात्। कृतस्य दुर्गार्चनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च यथासङ्ख्याकान् ब्राह्मणान् यथाकाले यथोत्पन्नेनाऽहं भोजयिष्ये। भोजनान्ते तेभ्यस्ताम्बूलदक्षिणां च दास्ये।**

*इति ब्राह्मणभोजनसङ्कल्पः।*

# पीठदानसङ्कल्पः

**ततो ग्रह (वा प्रधान) पीठदेवतानां गन्धादि-पञ्चोपचारै-रुत्तरपूजनं कुर्यात्। गणपत्याद्यावाहित-देवताभ्यो नमः। आचार्याय प्रधानपीठादि दद्यात्।**

**अद्य कृतस्य दुर्गार्चनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्ण-फलप्राप्त्यर्थं च इदं प्रधानपीठं ग्रहपीठं मातृकापीठं सोपस्करं दक्षिणासहितम् आचार्याय तुभ्यमहं सम्प्रददे।**

*इति पीठदानसङ्कल्पः।*

---

दक्षिणासंकल्प—तत्पश्चात् यजमान 'अद्य कृतस्य०' से 'दातुमह-मुत्सृजे' तक पढ़कर आचार्य आदि ऋत्विक्, सूक्तपाठक, मन्त्रजापक, हवनकर्त्ता एवं यज्ञ में अन्य सम्मिलित ब्राह्मणों के लिए दक्षिणा का संकल्प करे।

ब्राह्मणभोजन संकल्प—इसके बाद यजमान दुर्गार्चन कर्म की फलप्राप्ति के लिए 'कृतस्य दुर्गार्चनकर्मणः०' से 'यथोत्पन्नेनाऽहं भोजयिष्ये' तथा 'भोजनान्ते०' तक संकल्प-वाक्य से ब्राह्मण-भोजन संकल्प एवं भोजनान्त में ताम्बूल और दक्षिणा का संकल्प करे।

पीठदानसंकल्प—तदनन्तर यजमान गणपत्यादि आवाहित देवताओं

# अभिषेकः

ततो रुद्रकलश-देवतान्तरकलशोदकमेकस्मिन् पात्रे कृत्वा दुर्वापञ्चपल्लवैरुदङ्मुख आचार्यस्तिष्ठन् चत्वारो ऋत्विजश्च सकुटुम्बं स्वोत्तरतः सपत्नीकं यजमानं प्राङ्मुखमुपविष्टमभिषिञ्चेयुः ।

तत्र मन्त्राः–देवस्यं त्त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहु-ब्भ्यां पूष्णणो हस्ताब्भ्याम् । सरस्वत्यै व्वाचो यन्तु-र्य्यन्त्रियें दधामि बृहस्प्पतेष्ट्वा साम्म्राज्ज्येनाभिषिञ्चा-म्यसौ ॥१॥ देवस्यं त्त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्यां पूष्णणो हस्ताब्भ्याम् । सरस्वत्यै व्वाचो यन्तुर्य्यन्त्रेणा-ऽग्नेः साम्म्राज्ज्येनाभिषिञ्चामि ॥२॥ देवस्यं त्त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुब्भ्यां पूष्णणो हस्ताब्भ्याम् । अश्श्विनो-र्भैषज्ज्येन तेजसे ब्ब्रह्मव्वर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्ज्येन व्वीर्य्याय यान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण

---

की गन्धादि पंचोपचार से उत्तर पूजन कर 'अद्य कृतस्य०' से 'तुभ्यमहं सम्प्रददे' तक संकल्प पढ़कर प्रधानपीठ, ग्रहपीठ और मातृकापीठ आदि वस्त्र, दक्षिणा सहित आचार्य को दे।

**अभिषेक**–तदनन्तर रुद्रकलश तथा अन्य कलशों से जल को एक पात्र में रखकर दूर्वा एवं पंचपल्लवों से आचार्य तथा अन्य चार ऋत्विक भी उत्तर मुँह हो अपने से उत्तर पूर्वाभिमुख बैठे हुए सपरिवार एवं सपत्नीक यजमान का 'ॐ देवस्य त्वा सवितुः०'

बलाय श्रियै यशसेऽभिषिञ्चामि ॥३॥

सुरास्त्वामभिषिञ्चन्तु ब्रह्म-विष्णु-महेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥१॥
प्रद्युम्नश्चाऽनिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥२॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥३॥
कीर्ति-र्लक्ष्मी-र्धृति-र्मेधापुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥४॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुध-जीव-सिता-ऽर्कजाः ॥५॥
ग्रहास्त्वामभिषिञ्चन्तु राहु-केतुश्च तर्पिताः ।
देव-दानव-गन्धर्वा यक्ष-राक्षस-पन्नगाः ॥६॥
ऋषयो मनवो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाऽप्सरसां गणाः ॥७॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्याऽवयवाश्च ये ॥८॥
सरितः सागराः शैलस्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामा-ऽर्थसिद्धये ॥९॥
अमृताभिषेकोऽस्तु । शान्तिः पुष्टिस्तुष्टिश्चाऽस्तु ।

*इत्याभिषेकः ।*

---

से 'शान्तिः पुष्टिस्तुष्टिश्चाऽस्तु' तक पढ़कर अभिषेक करें ।

# छायापात्रदानम्

यजमानः एकस्मिन् कांस्यपात्रे स-सुवर्णं स-दक्षिणाकं च आज्यं स्थाप्य, आत्मप्रकृतिं निरीक्ष्य ब्राह्मणाय दद्यात्। उक्तं च-

कांस्यपात्रे स्थिताज्यं च आत्मरूपं निरीक्ष्य तु।
स-सुवर्णं तु यो दद्यात् सर्वविघ्नोपशान्तये।।

ॐ रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु। ऋतस्य पथा प्रेत चन्द्रदक्षिणा विस्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ॥

इति मन्त्रं पठित्वाऽऽज्ये मुखमवलोक्य सङ्कल्पं कुर्यात्।

सङ्कल्पः- 'अद्येत्याद्युच्चार्य ममैतच्छरीरावच्छिन्नसमस्त-पापक्षय-सर्वग्रहपीड़ाशान्ति-शरीरोत्थार्तिनाशाय प्रासाद-वाञ्छा-ऽऽयुरारोग्यादि-सर्वसौभाग्यप्राप्तये सर्वसौख्यप्राप्तये च इदं स्वमुखछायावीक्षिताज्यपूरित-कांस्यपात्रं स-सुवर्णं स-दक्षिणाकं श्रीविष्णुदैवतममुकगोत्राय अमुकशर्मणे सुपूजिताय ब्राह्मणाय तुभ्यमहं सम्प्रददे।' इति सङ्कल्पं कृत्वा प्रार्थयेत्।

---

छायापात्रदान-यजमान एक काँसे की कटोरी में घी रखकर, उसमें दक्षिणा सहित सुवर्ण छोड़कर अपनी मुख की छाया को देखकर ब्राह्मण को दे। कहा भी है-'कास्यपात्रे स्थिताज्यं च०'।

पश्चात् 'रूपेण वो०' मन्त्र पढ़कर कटोरी में स्थित घी में अपना मुख देखकर 'अद्येत्याद्युच्चार्य०' से 'तुभ्यमहं सम्प्रददे' तक संकल्प-वाक्य पढ़कर ब्राह्मण को दे दे।

प्रार्थना- याऽलक्ष्मीर्यच्च मे दौस्थ्यं सर्वाङ्गं समुपस्थितम् ।
तत्सर्वं नाशयाऽऽज्य ! त्वं श्रियमायुश्च वर्द्धय ।।१।।
आज्यं सुराणामाहारः सर्वमाज्ये प्रतिष्ठितम् ।
आज्यपात्रप्रदानेन शान्तिरस्तु सदा मम ।।२।।

*इति दुर्गार्चनपद्धतौ छायापात्रदानम् ।*



## भूयसीदक्षिणासङ्कल्पः

तत अन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दद्यात् । 'कृतस्य दुर्गार्चनहवनकर्मणः साङ्गतासिद्ध्यर्थं तन्मध्ये न्यूनाऽतिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो नानाशर्मब्राह्मणेभ्यः समाश्रितबन्धुवर्गेभ्यो नट-नर्तक-गायकेभ्यो दीनानाथेभ्यश्च यथोत्साहं भूयसीं दक्षिणां विभज्य दातुमहमुत्सृजे ।

*इति भूयसीदक्षिणासङ्कल्पः ।*



---

तदनन्तर 'याऽलक्ष्मीर्यच्च मे दौस्थ्यं०' से लेकर 'शान्तिरस्तु सदा मम' पर्यन्त श्लोक पढ़कर प्रार्थना करे ।

भूयसीदक्षिणा संकल्प—इसके बाद दुर्गार्चनकर्म न्यूनातिरिक्त (कमी-वेशी) दोष परिहारार्थ अनेक गोत्र वाले ब्राह्मणों, बन्धु-बान्धवों, नट-नर्तक-गायकों और दीनानाथों के लिए यथाशक्ति भूयसी दक्षिणा का संकल्प करें ।

## आवाहितदेवतानां विसर्जनम्

ततो देवताऽग्निं सानुनयं विसृजेत्।

ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव ऽइन्द्र प्राशूर्भवा सचा॥

यान्तु देवगणाः सर्वे पूजामादाय मामकीम्।
इष्टकामार्थसिद्ध्यर्थं पुनरागमनाय च॥
आवाहितदेवताः स्वस्थाने गच्छत।

ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तज्जुषस्व स्वाहा॥

गच्छ गच्छ सुरश्रेष्ठ! स्वस्थाने परमेश्वर।
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन!॥१॥
यज्ञनारायण स्वस्थाने गच्छ।
ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च॥२॥
गच्छ देवि! निजं स्थानं मह्यं दत्वा वरान् बहून्।
गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि!॥३॥
दुर्गे देवि! जगन्मातः! स्वस्थानं गच्छ पूजिता।
संवत्सर-व्यतीते तु पुनरागमनाय वै॥४॥
इमां पूजां मया देवि! यथाशक्त्युपपादिताम्।
रक्षार्थं च समागच्छ व्रज स्वस्थानमुत्तमम्॥५॥

आवाहित देवताओं का विसर्जन—तत्पश्चात् देवताओं और अग्नि का

मया यत्कृतं यथाकालं यथाऽऽदेशं यथाज्ञानं यथाशक्ति दुर्गार्चनाख्यं कर्म तेन श्रीपापापहा महाविष्णुः प्रीयताम्।

सकुशजलं भूमौ क्षिपेत्, करौ सम्पुटीकृत्य। मया यत्कृतं दुर्गार्चनाख्यं कर्म तत् कालहीनं भक्तिहीनं श्रद्धाहीनं भवतां ब्राह्मणानां वचनात् श्रीसूर्याद्यावाहित-देवता-प्रसादात् सर्वविधेः परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु। 'अस्तु परिपूर्णम्' इति ब्राह्मणाः वदेयुः।

*इत्यावाहितदेवतानां विसर्जनम्।*

# क्षमा-प्रार्थना

जपच्छिद्रं तपश्छिद्रं यच्छिद्रं शान्तिकर्मणि।
सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः॥१॥
प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥२॥
यस्य स्मृत्या च नामोक्त्या तपो-यज्ञ-क्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥३॥

---

प्रार्थना पूर्वक 'ॐ उत्तिष्ठ ब्रह्मणस्पते०' से 'श्रीपापापहा महाविष्णुः प्रीयताम्' पर्यन्त पढ़कर अक्षत छिड़कते हुए विसर्जन करे। कुश सहित जल भूमि पर गिरा दे और यजमान दोनों हाथ जोड़कर 'मया यत्कृतं दुर्गार्चनाख्यं कर्म' से 'भवन्तो ब्रवन्तु' तक पढ़कर प्रार्थना करे। 'अस्तु परिपूर्ण' यह ब्राह्मण कहें।

*इस प्रकार आवाहित देवताओं का विसर्जन समाप्त।*

क्षमा-प्रार्थना—तत्पश्चात् यज्ञकर्ता 'जपच्छिद्रं तपश्छिद्रं०' से लेकर 'सद्यो वन्दे तमच्युतम्' तक पढ़कर क्षमा-प्रार्थना करे।

# तिलकाशीर्वादः

श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात् पवमानं महीयते।
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ।।१।।
मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ।।२।।
आयुष्कामो यशस्कामो पुत्र-पौत्रस्तथैव च।
आरोग्यं धनकामश्च सर्वे कामा भवन्तु मे ।।३।।

*इति देवरिया-मण्डलान्तर्गत-'मझौली राज्य' निवासि - (सम्प्रति वाराणसीस्थ)-पण्डित-श्रीकान्तमिश्रशर्मणां पौत्रेण सुप्रसिद्ध-कोविदकुल-प्रसूत-पण्डित-श्रीसन्तशरणमिश्रशर्मणां पुत्रेण व्याकरणाचार्य - साहित्यवारिधि -*
***आचार्य-पण्डित-श्रीशिवदत्तमिश्रशास्त्रिणा***
*'शिवदत्ती'-हिन्दी-व्याख्यया विभूष्य*
*विरचिता सम्पादिता च*
*दुर्गार्चनपद्धतिः समाप्ता।*



---

तिलकाशीर्वाद—तदनन्तर ब्राह्मणगण 'श्रीर्वर्चस्वमायुष्यमारोग्य-माविधात्०' से 'सर्वे कामा भवन्तु मे' तक पढ़कर यजमान को तिलक लगाकर आशीर्वाद देवें।



# परिशिष्टम्

## शतचण्डीप्रयोगः

मन्त्रमहोदधौ—

शतचण्डीविधानं तु प्रवक्ष्ये प्रीतये नृणाम् ।
नृणोपद्रव आपन्ने दुर्भिक्षे भूमिकम्पने ।। १ ।।
अतिवृष्ट्यामनावृष्टौ परचक्रभये क्षये ।
सर्वे विघ्ना विनश्यन्ति शतचण्डीविधौ कृते ।। २ ।।
रोगाणां वैरिणां नाशौ धन-पुत्र-समृद्धयः ।
शङ्करस्य भवान्या वा प्रासादनिकटे शुभम् ।। ३ ।।
मण्डपं द्वारवेद्याढ्यं कुर्यात् स-ध्वजतोरणम् ।
तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा ।। ४ ।।
स्नात्वा नित्यक्रियां कृत्वा वृणुयाद् दशवाडवान् ।
जितेन्द्रियान् सदाचारान् कुलीनान् सत्यवादिनः ।। ५ ।।
व्युत्पन्नांश्चण्डिकापाठरतान् लज्जा-दयावतः ।
मधुपर्कविधानेन स्वर्ण-वस्त्रादि-दानतः ।। ६ ।।

---

मन्त्रमहोदधि-वर्णित-शतचण्डी प्रयोग—साधक के कल्याण के लिए शतचण्डी विधान का वर्णन करते हैं। राज्योपद्रव, दुर्भिक्ष, भूकम्प, अतिवृष्टि, अनावृष्टि और शत्रुकृत चक्रभय आदि समस्त विघ्न शतचण्डी विधान से नष्ट होते हैं ।।१-२।। इसी प्रकार रोग, शत्रु आदि भी नष्ट होते हैं। शिव अथवा दुर्गा-मन्दिर में, ध्वजा, तोरण आदि से सुसज्जित मण्डप एवं द्वार का निर्माण करे। तथा पश्चिम की ओर अथवा मध्य भाग में कुण्ड का निर्माण करे ।।३-४।।

साधक को चाहिए कि स्नान आदि नित्य क्रिया से निवृत्त होकर जितेन्द्रिय, सदाचारी, कुलीन, सत्यवादी, व्युत्पन्न, देवी के नित्य पाठ में तत्पर एवं लज्जा, दयावान् ऐसे दश ब्राह्मणों का मधुपर्क विधान तथा स्वर्ण, वस्त्र आदि से सत्कृत कर वरण करें ।।५-६।।

जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम् ।
ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः ।। ७ ।।
भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् ।
मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः ।। ८ ।।
नवार्णं चण्डिकामन्त्रं जपेयुश्चाऽयुतं पृथक्[1] ।
(अष्टमी-नवमी-चतुर्दशी-पौर्णमासीषु यथा शतावृत्तिसमाप्ति-र्भवति तथाऽऽरम्भः कर्तव्य इति साम्प्रदायिकाः ।)
यजमानः पूजयेच्च कन्यानां नवकं शुभम् ।। ९ ।।
द्विवर्षाद्या दशाब्दान्ताः कुमारीः परिपूजयेत् ।
नाऽधिकाङ्गीं न हीनाङ्गीं कुष्ठिनीं च व्रणाङ्कितम् ।।१०।।
अन्धां काणां केकरां च कुरूपां रोमयुक्-तनुम् ।
दासीजातां रोगयुक्तां दुष्टां कन्यां न पूजयेत् ।।११।।

उन वृणीत ब्राह्मणों को आसन एवं जप के लिए रुद्राक्ष की माला तथा भोजन प्रदान करे। वृणीत ब्राह्मणों को चाहिए कि वे हविष्यान्न ही भोजन करें। अपने अन्तःकरण में निरन्तर चण्डी (दुर्गा) मन्त्रार्थ का चिन्तन करते हुए भूमि पर शयन करें। इस प्रकार मार्कण्डेय पुराणान्तर्गत दुर्गा सप्तशती का पाठ करें तथा दस हजार जापक नित्य नवार्ण मन्त्र का जप करें, या प्रत्येक ब्राह्मण प्रतिदिन दस हजार जप करें ।।७-८½।। (साथ ही अष्टमी, नवमी, चतुर्दशी और पूर्णिमा तिथि में शतावृत्ति पाठ समाप्त हो ऐसी व्यवस्था करें।)

तत्पश्चात् यजमान दो वर्ष से लेकर दस वर्ष पर्यन्त नव कुमारिकाओं का पूजन करे। वे कुमारियाँ अधिक अंग, हीन अंग, कोढ़ी, फोड़ा-फुन्सी युक्त, अन्धी, कानी, खुजली वाली, कुरूप, अधिक रोएँ वाली, दासी से उत्पन्न, रोगी और दुष्ट स्वभाव वाली न हो, ऐसी कन्याओं का पूजन न करे ।।९-११।।

१. पृथक्-सम्पुटीकरणादिति शेषः। प्रत्येकं ब्राह्मणैरयुतजपः कार्यः।

विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ।
वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ।।१२।।
द्विवर्षा सा कुमार्युक्ता त्रिमूर्तिर्हायनत्रिका ।
चतुरब्दा तु कल्याणी पञ्चवर्षा तु रोहिणी ।।१३।।
षडब्दा कालिका प्रोक्ता चण्डिका सप्तहायनी ।
अष्टवर्षा शाम्भवी स्याद् दुर्गा तु नवहायनी ।।१४।।
सुभद्रा दशवर्षोक्ता नाममन्त्रैः प्रपूजयेत् ।
तासामावाहने मन्त्रः प्रोच्यते शङ्करोदितः ।।१५।।
मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ।।१६।।
कुमारिकादि-कन्यानां पूजामन्त्रान् ब्रुवेऽधुना ।

कन्यापूजनमन्त्रा:

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ! ।
पूजां गृहाण कौमारि ! जगन्मातर्नमोऽस्तु ते ।।१७।।
त्रिपुरां त्रिपुराधारां त्रिवर्गज्ञानरूपिणीम् ।
त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम् ।।१८।।

---

समस्त कार्य की सिद्धि के लिए ब्राह्मण कुमारिकाओं का, यश के लिए क्षत्रिय कुमारिकाओं का, धन-प्राप्ति के लिए वैश्य कुमारिकाओं का और पुत्र-प्राप्ति के निमित्त शूद्र कुमारिकाओं का पूजन करें ।।१२।।

दो वर्ष की कन्या 'कुमारी', तीन वर्ष की 'त्रिमूर्ति', चार वर्ष की 'कल्याणी', पाँच वर्ष की 'रोहिणी', छह वर्ष की 'कालिका', सात वर्ष की 'चण्डिका', आठ वर्ष की 'शाम्भवी', नव वर्ष की 'दुर्गा' तथा दस वर्ष की कन्या का नाम 'सुभद्रा' है। इन नवों कन्याओं का शङ्कर द्वारा कथित आवाहन आदि के मन्त्रों से 'मन्त्राक्षरमयीं लक्ष्मीं०' से लेकर 'कन्यामावाहयाम्यहम्' तक पढ़कर पूजन करे ।।१३-१६।।

इसके बाद कुमारिका पूजन आदि मन्त्रों का वर्णन करते हुए कहते हैं, जो इस प्रकार है–'जगत्पूज्ये जगद्वन्द्ये०' से लेकर 'जगन्मात-

कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम् ।
कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम् ।।१९।।
अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ।
अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम् ।।२०।।
कामाचारां शुभां कान्तां कालचक्रस्वरूपिणीम् ।
कामदां करुणोदारां कालिकां पूजयाम्यहम् ।।२१।।
चण्डवीरां चण्डमायां चण्ड-मुण्ड-प्रभञ्जनीम् ।
पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम् ।।२२।।
सदाऽऽनन्दकरीं शान्तां सर्वदेवनमस्कृताम् ।
सर्वभूतात्मिकां लक्ष्मीं शाम्भवीं पूजयाम्यहम् ।।२३।।
दुर्गमे दुस्तरे कार्ये भव-दुःख-विनाशिनीम् ।
पूजयामि सदा भक्त्या दुर्गां दुर्गार्ति-नाशिनीम् ।।२४।।
सुन्दरीं स्वर्णवर्णाभां सुख-सौभाग्य-दायिनीम् ।
सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम् ।।२५।।
एतैर्मन्त्रैः पुराणोक्तैस्तां तां कन्यां समर्चयेत् ।
गन्धैः पुष्पैर्भक्ष्य-भोज्यैर्वस्त्रैराभरणैरपि ।।२६।।

---

र्नमोऽस्तु ते' तक पढ़कर कुमारी का पूजन करे ।।१७।। 'त्रिपुरां त्रिपुराधारां०' से 'त्रिमूर्तिं पूज्याम्यहम्' पर्यन्त पढ़कर त्रिमूर्ति कुमारी का गन्ध, अक्षत और पुष्पादि द्वारा अर्चना करे ।।१८।।

'कालात्मिकां कलातीतां०' से लेकर 'कल्याणीं पूजयाम्यहम्' तक पढ़ कर कल्याणी का, 'अणिमादि-गुणाधारां०' से 'रोहिणीं पूजयाम्यहम्' तक पढ़कर रोहिणी का तथा 'कामाचारां शुभां कान्तां०' से 'कालिकां पूजयाम्यहम्' तक पढ़कर कालिका का पूजन करे ।।१९-२१।।

'चण्डवीरां चण्डमायां०' से 'चण्डिकां चण्डविक्रमाम्' पर्यन्त मन्त्र उच्चारण कर चण्डिका का, 'सदानन्दकरीं शान्तां' से आरम्भ कर 'शाम्भवीं पूजयाम्यहम्' तक पढ़कर शाम्भवी का, 'दुर्गमे दुस्तरे कार्ये०'

वेद्यां विरचिते रम्ये सर्वतोभद्रमण्डले ।
घटं संस्थाप्य विधिना तत्राऽवाह्याऽर्चयेच्छिवाम् ।।२७।।
तदग्रे कन्यकाश्चाऽपि पूजयेद् ब्राह्मणानपि ।
उपचारैस्तु विविधैः पूर्वोक्तावरणादपि ।।२८।।

होमद्रव्याणि

एवं चतुर्दिनं कृत्वां पञ्चमे होममाचरेत् ।
पायसान्नै-स्त्रिमध्वक्तै-र्द्राक्षारम्भा-फलादिभिः ।।२९।।
मातुलिङ्गैरिक्षुखण्डैर्नारिकेलयुतैस्तिलैः ।
जातीफलैराम्रफलैरन्यैर्मधुर-वस्तुभिः ।।३०।।
सप्तशत्या दशावृत्त्या प्रतिमन्त्रं हुतं चरेत् ।
अयुतं च नवार्णेन स्थापितेऽग्नौ विधानतः ।।३१।।
कृत्वा-ऽऽवरण-देवानां होमं तन्नाममन्त्रतः ।
कृत्वा पूर्णाहुतिं सम्यग् देवमग्निं विसृज्य च ।।३२।।
अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः ।
निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् ।।३३।।

---

से लेकर 'दुर्गां दुर्गार्ति-नाशिनीम्' तक कहकर दुर्गा का और 'सुन्दरीं स्वर्णवर्णाभां०' से 'सुभद्रां पूजयाम्यहम्' तक कहकर सुभद्रा आदि नव कुमारिकाओं को गन्ध, पुष्प, वस्त्र, आभरण आदि समर्पित करे ।।२२-२६।।

सर्वतोभद्र मण्डल में विधि-विधान से घटस्थापन कर दुर्गा का आवाहन एवं पूजन करे ।।२७।। उस मण्डल के आगे विविध उपचारों से ब्राह्मणों एवं कन्याओं का पूजन करे ।।२८।।

इस प्रकार चार दिन पर्यन्त पूजन कर पाँचवे दिन से पायस (खीर), त्रिमधु, दाख, केला, मातुलिङ्ग, इक्षुखण्ड (ऊँख के टुकड़े), नारियल, तिल, जातीफल एवं आम का फल आदि मधुर वस्तुओं से शतचण्डी प्रयोग में सप्तशती के दस पाठ का हवन करे, और दस हजार नवार्ण मन्त्र का हवन करे ।।२९-३१।। तथा उन-उन नाम मन्त्रों से आवरण

मम सकुटुम्बस्य सपरिवारस्या-ऽऽयुरारोग्य-विपुल-पुत्र-पौत्रा-द्यनवच्छिन्न-सन्ततिवृद्धि -स्थिरलक्ष्मी- कीर्तिलाभ-शत्रुपराजय-सदभीष्टसिद्ध्यर्थं श्रीमहाकाली-महालक्ष्मी-महासरस्वतीदेवता-प्रीत्यर्थं कृतस्य शतचण्डी-(नवचण्डी-सहस्रचण्डी-लक्षचण्डी वा) पाठसाङ्गतासिद्ध्यर्थं तद्दशांशहवन-तद्दशांशतर्पण-तद्दशांश-मार्जन-तद्दशांशब्राह्मणभोजनं च करिष्ये। तदङ्गत्वेन स्वस्ति-पुण्याहवाचन-मातृका-पूजनं वसोर्द्धारापूजनमायुष्यमन्त्रजपमाचार्यादि-वरणानि च करिष्ये। तत्राऽऽदौ निर्विघ्नतासिद्ध्यर्थं गणेशाऽम्बिकयोः पूजनमहं करिष्ये।

तदनन्तरं गणेशपूजनादारभ्य पूर्णाहुतिपर्यन्तं सर्वं कार्यं प्रस्तुत-दुर्गार्चनपद्धत्यनुसारेण कुर्यात्। प्रधानहवने तु सप्तशती-प्रतिश्लोके स्वाहान्तहोमः। चर्वाज्यद्रव्येण कुर्यादिति विशेषः। तर्पणे—'दुर्गां तर्पयामि। मार्जने—दुर्गां मार्जयामि'।

अत्र नवचण्ड्यां नवब्राह्मणाः। शतचण्ड्यां दश। सहस्र-चण्ड्यां शतम्। लक्षचण्ड्यां सहस्रम्। केचिदत्र ग्रहजपार्थ-मेकमृत्विजं वरयन्ति।

*इति नवचण्डी-शतचण्डी-सहस्रचण्डी-लक्षचण्डी-हवनप्रयोगः समाप्तः।*



## सप्तशती-मन्त्र-हवन-विधानम्

शून्यागारे शवस्याऽग्रे श्मशाने च चतुष्पथे।
देवीमन्त्रं जपेद् यस्तु समः सिद्ध्यति साधकः॥ १॥
सूर्योदयं समारभ्य पुनः सूर्योदयान्तरम्।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत्॥ २॥

---

शून्यगृह, शव के आगे, श्मशान और चौराहे पर जो साधक देवी-मन्त्र का जप करता है, उसे वर्ष भर में निश्चय ही सिद्धि प्राप्त होती है॥१॥

अर्धरात्रेऽपि मध्याह्ने पुरश्चरणमारभेत् ।
सूर्योदयात् समारभ्य यावत्सूर्योदयान्तरम् ।। ३ ।।
तावज्जप्त्वा निरातङ्को मन्त्रः कल्पद्रुमो भवेत् ।
प्रातःकालं समारभ्य जपेन्मन्त्रं दिनावधि ।। ४ ।।

देवी-रहस्ये मारीचकल्पतन्त्रे च

'गर्ज गर्जे'ति मन्त्रेण सुरां दद्यात् प्रयत्नतः ।
अथवा माक्षिकं दद्यात् विशेषेण सुरेश्वरि ! ।। १ ।।
'शूलेने'ति चतुर्मन्त्रैर्नाऽऽहुतिं कश्चिदाचरेत् ।
यदि मोहाच्चरेद् वाऽपि तस्य नाशो न संशयः ।। २ ।।
'महालक्ष्मी'त्यनेनैव चतुर्धा हवनं चरेत् ।
'एवं स्तुता सुरैर्दिव्यै'र्मन्त्रेणाऽनेन साधकः ।। ३ ।।
गन्ध-पुष्पाणि संदद्यात् पूजयेज्जगदम्बिकाम् ।
'ततः कोपं च' मन्त्रेण मसिं दद्यान् महेश्वरि ! ।। ४ ।।

---

जो सूर्योदय से लेकर पुनः सूर्योदय पर्यन्त अर्थात् अहर्निश जप करता है वह समस्त भयों से रहित एवं समस्त सिद्धियाँ प्राप्त करता है ।।२।। अर्धरात्रि एवं मध्याह्न में भी जप-पुरश्चरण आरम्भ करे। इसी प्रकार अखण्ड (रात-दिन) जप करने से तथा प्रातःकाल से लेकर सायंकाल तक जप करने से भी साधक समस्त भयों से मुक्त होता है, तथा वह मन्त्र कल्पवृक्ष के समान सभी मनोरथों को पूर्ण करता है ।।३-४।।

हे सुरेश्वरि ! हवन के समय 'गर्ज गर्ज क्षणं मूढ !' (अ० ३ । श्लोक ३८) इस मन्त्र से सुरा (मद्य) या माक्षिक (मधु) का हवन करे ।।१।।

शक्रादि-स्तुतिस्थित 'शूलेन पाहि नो देवि०' (अ०४ । श्लोक २४) से 'तैरस्मान् रक्ष सर्वतः' (अ०४ । श्लोक २७) पर्यन्त चार मन्त्रों से शाकल की आहुति न दे। यदि कोई साधक मोहवश शाकल की आहुति देता है तो निश्चय ही वह नष्ट हो जाता है, इसमें संशय नहीं। चारों श्लोकों का पाठ कर 'ॐ महालक्ष्म्यै स्वाहा' इस मन्त्र से चार आहुति प्रदान करे। साधक 'एवं स्तुता सुरैर्दिव्यैः०' (अ०४ । श्लोक २९) इस

'मुखेन काली' मन्त्रान्ते रक्तं दद्यात् पशोरपि।
अथवा कपिकाष्ठं च विकल्पेनैव होमयेत्॥ ५ ॥
'भक्षयन्त्याश्च' मनुना दाडिमीकुसुमेन च।
'ततोऽहमि'ति मन्त्रेण शाकं दद्यात्तथोत्तमम्॥ ६ ॥
'तदा तदे'ति मन्त्रेण सिद्धार्थानपि होमयेत्।
तदन्ते हवनं कुर्यात् प्रतिश्लोकेन पायसैः॥ ७ ॥
छागं तु प्रथमे दद्यात् द्वितीये माहिषं तथा।
तृतीये कारणेनैव सर्वकामार्थसिद्धये॥ ८ ॥
चतुर्थे तूर्यमांसेन लक्ष्मीकामार्थसिद्धये।
पञ्चमे शशमांसेन मोहनार्थं महेश्वरि !॥ ९ ॥
षष्ठे च सप्तमे देवि ! खड्गेनैव हुनेत्तथा।
अष्टमे तु महेशानि ! वन्यवाराहकेण च॥१०॥

मन्त्र से गन्ध, पुष्प की आहुति देकर देवी का पूजन करे। हे महेश्वरि ! 'ततः कोपं चकारोच्चैः०' (अ०७। श्लोक ५) इस मन्त्र से मसी (कपूरयुक्त कज्जल) का हवन करे॥२-४॥

'मुखेन काली जगृहे०' (अ०८। श्लोक ५७) मन्त्र से अज (बकरा) या महिष (भैंसा) के रक्त से अथवा इनका रक्त न मिलने पर कपिकाष्ठ से हवन करे॥५॥ 'भक्षयन्त्याश्च तानुग्रान्०' (अ०११। श्लोक ४४) इस मन्त्र से अनार या उसके पुष्प से हवन करे। इसी प्रकार 'ततोऽहमखिलं लोके०' (अ०११। श्लोक ४८) इस मन्त्र से शाक (सोआपालक, चौराई) द्वारा हवन करे॥६॥ 'इत्थं यदा यदा बाधा०' (अ०११। श्लोक ५४) मन्त्र से खीर का हवन करे, एवं एकादश अध्याय के समस्त श्लोकों से भी खीर-मिश्रित शाकल का हवन करे॥७॥

साधक को चाहिए कि प्रथम अध्याय के अन्त में छाग (बकरा) का मांस, द्वितीय अध्याय में महिष (भैंस) का मांस, तृतीय अध्याय में भी समस्त अभीष्ट (इच्छित) सिद्धि प्राप्ति के लिए पूर्वोक्त महिष के मांस का हवन करे॥८॥

नवमे मार्जारमांसेन दशमे गोधया तथा ।
रौद्रे कुक्कुटमांसेन सर्वकामार्थसिद्धये ।।११।।
आदित्ये तु महेशानि जम्बुकेन तथैव च ।
त्रयोदशेऽश्वमांसेन विधिना साधकोत्तमः ।।१२।।
इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया ।
अभक्ताय न दातव्यं न देयं यस्य कस्यचित् ।।१३।।
प्रथमे मधुना कुर्याद् द्वितीये गुग्गुलेन च ।
तृतीये च प्रकर्तव्यं माहिषेण घृतेन च ।। १ ।।
शक्रादीनां स्तुतौ कुर्याद् गन्धा-ऽक्षत-समन्वितैः ।
कदली वेक्षुदण्डैश्च बाणषष्ठे च सप्तमे ।। २ ।।
रक्तबीजवधे कुर्याद् रक्तचन्दन-मिश्रितम् ।
कुर्याद् होमं प्रयत्नेन नानाद्रव्यैः समन्वितम् ।। ३ ।।

---

हे महेश्वरि ! लक्ष्मी की प्राप्ति के लिए चतुर्थ अध्याय में तूर्य (सूखा) मांस तथा मोहन प्रयोग के लिए पंचम अध्याय में शश (खरगोश) के मांस का हवन करे ।।९।। हे देवि ! छठे और सातवें अध्याय में खड्ग (गैंडे) के मांस का हवन करे। हे महेश्वरि ! जंगली सूअर के मांस से आठवें अध्याय में हवन करे ।।१०।।

समस्त कामना सिद्धि के लिए मार्जार (बिल्ली) के मांस, दशवें अध्याय में गोधा (गोह) के मांस और ग्यारहवें अध्याय में कुक्कुट (मुर्गा) के मांस से हवन करे ।।११।।

हे महेश्वरि ! बारहवें अध्याय में जम्बुक (सियार) का मांस तथा तेरहवें अध्याय में अश्व (घोड़ा) के मांस से हवन करे। साधक इस मांस-हवन के परमतत्त्व को अत्यन्त गुप्त रखें अर्थात् नास्तिक एवं अनाधिकारी से कभी न प्रकट करे। यह मारीचकल्प तन्त्र का अनुभूत प्रयोग केवल परमशाक्तों के लिए ही है ।।१२-१३।।

जो साधक मांस आदि से घृणा करते हैं, उनके लिए-

प्रथम अध्याय में मधु से, द्वितीय अध्याय में गुग्गुल से, और तृतीय अध्याय में भैंस के घी से हवन करे ।।१।। शक्रादि स्तुति वाले

नवमे दशमे चैव नारायणिस्तुतौ तथा।
गन्ध-पुष्पैः प्रकर्तव्यं पायसेन समन्वितम्।। ४।।
शतपत्रैश्च कर्तव्यं गोरोचन-समन्वितम्।
द्वादशे त्रयोदशे च कर्तव्यं तु यथाविधिः।। ५।।
पञ्चखाद्येन कर्तव्यं रहस्यादि यथाक्रमम्।
एतत्क्रमेण कर्तव्यं द्रव्यं चैव मनोहरम्।। ६।।
आद्यन्ते च प्रकर्तव्यं पायसं शर्करान्वितम्।
नील-ब्रीहि-यवश्चैव होतस्यं च घृताप्लुतम्।
अन्यथा कुरुते यस्तु तत्सर्वं निष्फलं भवेत्।। ७।।

*इति देवीरहस्य-मारीचकल्पतन्त्रोक्तं सप्तशती-मन्त्र-हवन-विधानं समाप्तम्।*

●

---

चौथे अध्याय में मिले हुए गन्ध, अक्षत से, पाँचवे, छठें एवं सातवें अध्याय में पके केले के टुकड़े या ईख के टुकड़े से हवन करे ।।२।। रक्तबीज वध रूप आठवें अध्याय में नाना सुगन्धितयुक्त लाल चन्दन के चूरे से हवन करे ।।३।। नवम, दशम तथा नारायणि-स्तुतिरूप एकादश अध्याय में पायस (खीर) युक्त गन्ध, पुष्प से हवन करे ।।४।।

द्वादश एवं त्रयोदश अध्याय में गोरोचन मिश्रित शतपत्र (गेंदे के पत्तों) से हवन करे। हवन के समय गरिष्ठ (अधिक) भोजन न करे। हवन के अनन्तर तीनों रहस्यों का यथाविधि पाठ करे और पूजन में सुन्दर एवं उत्तमोत्तम सामग्री भगवती को समर्पित करे ।।५-६।।

आदि और अन्त में नवार्ण मन्त्र जप से शर्करा मिश्रित खीर और घृत मिश्रित तिल, चावल एवं यव (शाकल) से हवन करे। इसके विपरीत जो साधक हवन करता है, उसके समस्त कार्य निष्फल होते हैं ।।७।।

*इस प्रकार देवी-रहस्य तथा मारीचकल्पतन्त्रोक्त दुर्गासप्तशती के मन्त्रों द्वारा हवन-विधान समाप्त।*

●

७७७. ॐ दाराग्निरूपिण्यै नमः
७७८. ॐ दारायै नमः
७७९. ॐ दारकार्यरिनाशिन्यै नमः
७८०. ॐ दम्पत्यै नमः
७८१. ॐ दम्पतीष्टायै नमः
७८२. ॐ दम्पतीप्राणरूपिकायै नमः
७८३. ॐ दम्पतीस्नेहनिरतायै नमः
७८४. ॐ दाम्पत्यसाधनप्रियायै नमः
७८५. ॐ दाम्पत्यसुखसेनायै नमः
७८६. ॐ दाम्पत्यसुखदायिन्यै नमः
७८७. ॐ दाम्पत्याचारनिरतायै नमः
७८८. ॐ दाम्पत्यामोदमोदितायै नमः
७८९. ॐ दाम्पत्यामोदसुखिन्यै नमः
७९०. ॐ दाम्पत्याह्लादकारिण्यै नमः
७९१. ॐ दम्पतीष्टपादपद्मायै नमः
७९२. ॐ दाम्पत्यप्रेमरूपिण्यै नमः
७९३. ॐ दाम्पंत्यभोगभवनायै नमः
७९४. ॐ दाडिमीफलभोजिन्यै नमः
७९५. ॐ दाडिमीफलसंतुष्टायै नमः
७९६. ॐ दाडिमीफलमानसायै नमः
७९७. ॐ दाडिमीवृक्षसंस्थानायै नमः
७९८. ॐ दाडिमीवृक्षवासिन्यै नमः
७९९. ॐ दाडिमीवृक्षरूपायै नमः
८००. ॐ दाडिमीवनवासिन्यै नमः
८०१. ॐ दाडिमीफलसाम्योरु-
पयोधरसमन्वितायै नमः
८०२. ॐ दक्षिणायै नमः
८०३. ॐ दक्षिणारूपायै नमः
८०४. ॐ दक्षिणारूपधारिण्यै नमः
८०५. ॐ दक्षकन्यायै नमः
८०६. ॐ दक्षपुत्र्यै नमः
८०७. ॐ दक्षमात्रे नमः
८०८. ॐ दक्षस्वे नमः
८०९. ॐ दक्षगोत्रायै नमः
८१०. ॐ दक्षसुतायै नमः
८११. ॐ दक्षयज्ञविनाशिन्यै नमः
८१२. ॐ दक्षयज्ञनाशकर्त्र्यै नमः
८१३. ॐ दक्षयज्ञान्तकारिण्यै नमः
८१४. ॐ दक्षप्रसूत्यै नमः
८१५. ॐ दक्षेज्यायै नमः
८१६. ॐ दक्षवंशैकपावन्यै नमः
८१७. ॐ दक्षात्मजायै नमः
८१८. ॐ दक्षसूनवे नमः
८१९. ॐ दक्षजायै नमः
८२०. ॐ दक्षजातिकायै नमः
८२१. ॐ दक्षजन्मने नमः
८२२. ॐ दक्षजनुषे नमः
८२३. ॐ दक्षदेहसमुद्भवायै नमः
८२४. ॐ दक्षजनुषे नमः
८२५. ॐ दक्षयागध्वंसिन्यै नमः
८२६. ॐ दक्षकन्यकायै नमः
८२७. ॐ दक्षिणाचारनिरतायै नमः
८२८. ॐ दक्षिणाचारतुष्टिदायै नमः
८२९. ॐ दक्षिणाचारसंसिद्धायै नमः
८३०. ॐ दक्षिणाचारभावितायै नमः
८३१. ॐ दक्षिणाचारसुखिन्यै नमः
८३२. ॐ दक्षिणाचारसाधितायै नमः
८३३. ॐ दक्षिणाचारमोक्षाप्त्यै नमः

८३४. ॐ दक्षिणाचारवन्दितायै नमः
८३५. ॐ दक्षिणाचारशरणायै नमः
८३६. ॐ दक्षिणाचारहर्षितायै नमः
८३७. ॐ द्वारपालप्रियायै नमः
८३८. ॐ द्वारवासिन्यै नमः
८३९. ॐ द्वारसंस्थितायै नमः
८४०. ॐ द्वाररूपायै नमः
८४१. ॐ द्वारसंस्थायै नमः
८४२. ॐ द्वारदेशनिवासिन्यै नमः
८४३. ॐ द्वारकर्यै नमः
८४४. ॐ द्वारधात्र्यै नमः
८४५. ॐ दोषमात्रविवर्जितायै नमः
८४६. ॐ दोषकरायै नमः
८४७. ॐ दोषहरायै नमः
८४८. ॐ दोषराशिविनाशिन्यै नमः
८४९. ॐ दोषाकरविभूषाढ्यायै नमः
८५०. ॐ दोषाकरकपालिन्यै नमः
८५१. ॐ दोषाकरसहस्राभायै नमः
८५२. ॐ दोषाकरसमाननायै नमः
८५३. ॐ दोषाकरमुख्यै नमः
८५४. ॐ दिव्यायै नमः
८५५. ॐ दोषाकरकराग्रजायै नमः
८५६. ॐ दोषाकरसमज्योतिषे नमः
८५७. ॐ दोषाकरसुशीतलायै नमः
८५८. ॐ दोषाकरश्रेण्यै नमः
८५९. ॐ दोषसदृशापाङ्गवीक्षणायै नमः
८६०. ॐ दोषाकरेष्टदेव्यै नमः
८६१. ॐ दोषाकरनिषेवितायै नमः
८६२. ॐ दोषाकरप्राणरूपायै नमः
८६३. ॐ दोषाकरमरीचिकायै नमः
८६४. ॐ दोषाकरोल्लसद्भालायै नमः
८६५. ॐ दोषाकरसुहर्षिण्यै नमः
८६६. ॐ दोषाकरशिरोभूषायै नमः
८६७. ॐ दोषाकरवधूप्रियायै नमः
८६८. ॐ दोषाकरवधूप्राणायै नमः
८६९. ॐ दोषाकरवधूमतायै नमः
८७०. ॐ दोषाकरवधूप्रीतायै नमः
८७१. ॐ दोषाकरवध्वै नमः
८७२. ॐ दोषापूज्यायै नमः
८७३. ॐ दोषापूजितायै नमः
८७४. ॐ दोषहारिण्यै नमः
८७५. ॐ दोषाजापमहानन्दायै नमः
८७६. ॐ दोषाजापपरायणायै नमः
८७७. ॐ दोषापुरश्चाररतायै नमः
८७८. ॐ दोषापूजकपुत्रिण्यै नमः
८७९. ॐ दोषापूजकवात्सल्यकारिणी-जगदम्बिकायै नमः
८८०. ॐ दोषापूजकवैरिघ्न्यै नमः
८८१. ॐ दोषापूजकविघ्नहृते नमः
८८२. ॐ दोषापूजकसन्तुष्टायै नमः
८८३. ॐ दोषापूजकमुक्तिदायै नमः
८८४. ॐ दमप्रसूनसम्पूज्यायै नमः
८८५. ॐ दमपुष्पप्रियायै नमः
८८६. ॐ दुर्योधनप्रपूज्यायै नमः
८८७. ॐ दुःशासनसमर्चितायै नमः
८८८. ॐ दण्डपाणिप्रियायै नमः

८८९. ॐ दण्डपाणिमात्रे नमः
८९०. ॐ दयानिधये नमः
८९१. ॐ दण्डपाणिसमाराध्यायै नमः
८९२. ॐ दण्डपाणिप्रपूजितायै नमः
८९३. ॐ दण्डपाणिगृहासक्तायै नमः
८९४. ॐ दण्डपाणिप्रियंवदायै नमः
८९५. ॐ दण्डपाणिप्रियतमायै नमः
८९६. ॐ दण्डपाणिमनोहरायै नमः
८९७. ॐ दण्डपाणिहृतप्राणायै नमः
८९८. ॐ दण्डपाणिसुसिद्धिदायै नमः
८९९. ॐ दण्डपाणिपरामृष्टायै नमः
९००. ॐ दण्डपाणिप्रहर्षितायै नमः
९०१. ॐ दण्डपाणिविघ्नहरायै नमः
९०२. ॐ दण्डपाणिशिरोधृतायै नमः
९०३. ॐ दण्डपाणिप्राप्तचर्यायै नमः
९०४. ॐ दण्डपाण्युन्मुख्यै नमः
९०५. ॐ दण्डपाणिप्राप्तपदायै नमः
९०६. ॐ दण्डपाणिवरोन्मुख्यै नमः
९०७. ॐ दण्डहस्तायै नमः
९०८. ॐ दण्डपाण्यै नमः
९०९. ॐ दण्डबाहवे नमः
९१०. ॐ दरान्तकृते नमः
९११. ॐ दण्डदोष्कायै नमः
९१२. ॐ दण्डकरायै नमः
९१३. ॐ दण्डचित्तकृतास्पदायै नमः
९१४. ॐ दण्डविद्यायै नमः
९१५. ॐ दण्डिमात्रे नमः
९१६. ॐ दण्डिखण्डकनाशिन्यै नमः
९१७. ॐ दण्डिप्रियायै नमः
९१८. ॐ दण्डिपूज्यायै नमः
९१९. ॐ दण्डिसन्तोषदायिन्यै नमः
९२०. ॐ दस्युपूज्यायै नमः
९२१. ॐ दस्युरतायै नमः
९२२. ॐ दस्युद्रविणदायिन्यै नमः
९२३. ॐ दस्युवर्गकृतार्हायै नमः
९२४. ॐ दस्युवर्गविनाशिन्यै नमः
९२५. ॐ दस्युनिर्णाशिन्यै नमः
९२६. ॐ दस्युकुलनिर्णाशिन्यै नमः
९२७. ॐ दस्युप्रियकर्यै नमः
९२८. ॐ दस्युनृत्यदर्शनतत्परायै नमः
९२९. ॐ दुष्टदण्डकर्यैनमः
९३०. ॐ दुष्टवर्गविद्राविण्यै नमः
९३१. ॐ दुष्टवर्गनिग्रहार्हायै नमः
९३२. ॐ दूषकप्राणनाशिन्यै नमः
९३३. ॐ दूषकोत्तापजनन्यै नमः
९३४. ॐ दूषकारिष्टकारिण्यै नमः
९३५. ॐ दूषकद्वेषणकर्यै नमः
९३६. ॐ दाहिकायै नमः
९३७. ॐ दहनात्मिकायै नमः
९३८. ॐ दारुकारिनिहन्त्र्यै नमः
९३९. ॐ दारुकेश्वरपूजितायै नमः
९४०. ॐ दारुकेश्वरमात्रे नमः
९४१. ॐ दारुकेश्वरवन्दितायै नमः
९४२. ॐ दर्भहस्तायै नमः
९४३. ॐ दर्भयुतायै नमः
९४४. ॐ दर्भकर्मविवर्जितायै नमः
९४५. ॐ दर्भमय्यै नमः
९४६. ॐ दर्भतनवे नमः

९४७. ॐ दर्भसर्वस्वरूपिण्यै नमः
९४८. ॐ दर्भकर्माचाररतायै नमः
९४९. ॐ दर्भहस्तकृतार्हणायै नमः
९५०. ॐ दर्भानुकूलायै नमः
९५१. ॐ दाम्भर्यायै नमः
९५२. ॐ दर्वीपात्रानुदामिन्यै नमः
९५३. ॐ दमघोषप्रपूज्यायै नमः
९५४. ॐ दमघोषवरदायै नमः
९५५. ॐ दमघोषसमाराध्यायै नमः
९५६. ॐ दावाग्निरूपिण्यै नमः
९५७. ॐ दावाग्निरूपायै नमः
९५८. ॐ दावाग्निनिर्णाशित-महाबलायै नमः
९५९. ॐ दन्तदंष्ट्रासुरकलायै नमः
९६०. ॐ दन्तचर्चितहस्तिकायै नमः
९६१. ॐ दन्तदंष्ट्रस्यन्दनायै नमः
९६२. ॐ दन्तनिर्णाशितासुरायै नमः
९६३. ॐ दधिपूज्यायै नमः
९६४. ॐ दधिप्रीतायै नमः
९६५. ॐ दधिचिवरदायिन्यै नमः
९६६. ॐ दधीचीष्टदेवतायै नमः
९६७. ॐ दधीचिमोक्षदायिन्यै नमः
९६८. ॐ दधीचिदैन्यहन्त्र्यै नमः
९६९. ॐ दधीचिदरदारिण्यै नमः
९७०. ॐ दधीचिभक्तिसुखिन्यै नमः
९७१. ॐ दधीचिमुनिसेवितायै नमः
९७२. ॐ दधीचिज्ञानदात्र्यै नमः
९७३. ॐ दधीचिगुणदायिन्यै नमः
९७४. ॐ दधीचिकुलसम्भूषायै नमः
९७५. ॐ दधीचिभुक्तिमुक्तिदायै नमः
९७६. ॐ दधीचिकुलदेव्यै नमः
९७७. ॐ दधीचिकुलदेवतायै नमः
९७८. ॐ दधीचिकुलगम्यायै नमः
९७९. ॐ दधीचिकुलपूजितायै नमः
९८०. ॐ दधीचिसुखदात्र्यै नमः
९८१. ॐ दधीचिदैन्यहारिण्यै नमः
९८२. ॐ दधीचिदुःखहन्त्र्यै नमः
९८३. ॐ दधीचिकुलसुन्दर्यै नमः
९८४. ॐ दधीचिकुलसम्भूतायै नमः
९८५. ॐ दधीचिकुलपालिन्यै नमः
९८६. ॐ दधीचिदानगम्यायै नमः
९८७. ॐ दधीचिदानमानिन्यै नमः
९८८. ॐ दधीचिदानसन्तुष्टायै नमः
९८९. ॐ दधीचिदानदेवतायै नमः
९९०. ॐ दधीचिजयसंप्रीतायै नमः
९९१. ॐ दधीचिजपमानसायै नमः
९९२. ॐ दधीचिजपपूजाढ्यायै नमः
९९३. ॐ दधीचिजपमालिकायै नमः
९९४. ॐ दधीचिजपसन्तुष्टायै नमः
९९५. ॐ दधीचिजपतोषिण्यै नमः
९९६. ॐ दधीचितापसाराध्यायै नमः
९९७. ॐ दधीचिशुभदायिन्यै नमः
९९८. ॐ दूर्वायै नमः
९९९. ॐ दूर्वादलश्यामायै नमः
१०००. ॐ दूर्वादलसमद्युतये नमः

*इति दुर्गार्चनपद्धतौ दकारादि-दुर्गासहस्रनामावली समाप्ता ।*

●

# श्रीदुर्गा-मानस-पूजा

उद्यच्चन्दन-कुङ्कुमारुण-पयोधाराभिराप्लावितां
नानानर्घ्य-मणि-प्रवाल-घटितां दत्तां गृहाणाऽम्बिके ।
आमृष्टां सुर-सुन्दरीभिरभितो हस्ताम्बुजैर्भक्तितो
मातः सुन्दरि ! भक्त-कल्प-लतिके श्रीपादुकामादरात् ।।१।।
देवेन्द्रादिभिरर्चितं सुरगणैरादाय सिंहासनं
चञ्चत्-काञ्चन-सञ्चयाभिरचितं चारु-प्रभा-भास्वरम् ।
एतच्चम्पक-केतकी-परिमलं तैलं महानिर्मलं
गन्धोद्वर्तनमादरेण तरुणीदत्तं गृहाणाऽम्बिके ।।२।।
पश्चाद् देवि गृहाण शम्भुगृहिणि श्रीसुन्दरि प्रायशो
गन्ध-द्रव्य-समूह-निर्भरतरं धात्रीफलं निर्मलम् ।
तत्केशान् परिशोध्य कङ्कतिकया मन्दाकिनी-स्रोतसि
स्नात्वा प्रोज्ज्वल-गन्धकं भवतु हे श्रीसुन्दरि त्वन्मुदे ।।३।।
सुराधिपति-कामिनी-करसरोज-नालीधृतां
सचन्दन-सकुङ्कुमागुरुभरेण विभ्राजिताम् ।
महापरिमलोज्ज्वलां सरस-शुद्ध-कस्तूरिकां
गृहाण वरदायिनि त्रिपुरसुन्दरि श्रीपदे ।।४।।
गन्धर्वा-ऽमर-किन्नर-प्रियतमासन्तान-हस्ताम्बुज-
प्रस्तारैर्ध्रियमाणमुत्तमतरं काश्मीरजा-पिञ्जरम् ।
मातर्भास्वर-भानुमण्डल-लसत्कान्ति-प्रदानोज्ज्वलं
चैतन्निर्मलमातनोतु वसनं श्रीसुन्दरि त्वन्मुदम् ।।५।।
स्वर्णाकल्पित-कुण्डले श्रुतियुगे हस्ताम्बुजे मुद्रिका
मध्ये सारसना नितम्बफलके मञ्जीरमङ्घ्रिद्वये ।
हारो वक्षसि कङ्कणो क्वणरणत्कारौ करद्वन्द्वके
विन्यस्तं मुकुटं शिरस्यनुदिनं दत्तोन्मदं स्तूयताम् ।।६।।

ग्रीवायां धृत-कान्ति-कान्त-पटलं ग्रैवेयकं सुन्दरं
सिन्दूरं विलसल्ललाट-फलके सौन्दर्य-मुद्राधरम् ।
राजत्कज्जलमुज्ज्वलोत्पलदल-श्रीमोचने लोचने
तद्दिव्यौषधि-निर्मितं रचयतु श्रीशाम्भवि श्रीपदे ॥७॥
अमन्दतर-मन्दरोन्मथित-दुग्ध-सिन्धूद्भवं
निशाकर-करोपमं त्रिपुरसुन्दरि श्रीपदे ।
गृहाण मुखमीक्षितुं मुकुरबिम्बमाविद्रुमै-
र्विनिर्मितमघच्छिदे रति-कराम्बुज-स्थायिनम् ॥८॥
कस्तूरी-द्रव-चन्दनागुरु-सुधा-धाराभिराप्लावितं
चञ्चच्चम्पक-पाटलादिसुरभिर्द्रव्यैः सुगन्धीकृतम् ।
देवस्त्रीगण-मस्तक-स्थित-महारत्नादि-कुम्भव्रजै-
रम्भःशाम्भवि सम्भ्रमेण विमलं दत्तं गृहाणाम्बिके ॥९॥
कह्लारोत्पल-नाग-केसर-सरोजाख्यावली-मालती
मल्ली-कैरव-केतकादि-कुसुमै रक्ताश्वमारादिभिः ।
पुष्पैर्माल्यभरेण वै सुरभिणा नानारस-स्रोतसा
ताम्राम्भोज-निवासिनीं भगवतीं श्रीचण्डिकां पूजये ॥१०॥
मांसी-गुग्गुल-चन्दना-ऽगुरु-रजः-कर्पूर-शैलेयजै-
र्माध्वीकैः सहकुङ्कुमैः सुरचितैः सर्पिर्भिरामिश्रितैः ।
सौरभ्य-स्थिति-मन्दिरे मणिमये पात्रे भवेत् प्रीतये
धूपोऽयं सुरकामिनी-विरचितः श्रीचण्डिके त्वन्मुदे ॥११॥
घृतद्रव-परिस्फुरद्रुचिर-रत्न-यष्ट्यान्वितो
महातिमिरनाशनः सुरनितम्बिनी-निर्मितः ।
सुवर्णचषकस्थितः सघनसारवर्त्यान्वित-
स्तव त्रिपुरसुन्दरि स्फुरति देवि दीपो मुदे ॥१२॥
जाती-सौरभ-निर्भरं रुचिकरं शाल्योदनं निर्मलं
युक्तं हिङ्गु-मरीच-जीर-सुरभि-द्रव्यान्वितैर्व्यञ्जनैः ।

पक्वान्नेन स-पायसेन मधुना दध्याज्य-सम्मिश्रितं
नैवेद्यं सुरकामिनी-विरचितं श्रीचण्डिके त्वन्मुदे ।।१३।।
लवङ्ग-कलिकोज्ज्वलं बहुल-नागवल्लीदलं
सजातिफलकोमलं सघनसार-पूगीफलम् ।
सुधामधुरिमाकुलं रुचिर-रत्नपात्र-स्थितं
गृहाण मुखपङ्कजे स्फुरितमम्ब ताम्बूलकम् ।।१४।।
शरत्प्रभव-चन्द्रमःस्फुरित-चन्द्रिकासुन्दरं
गलत्सुरतरङ्गिणी-ललित-मौक्तिकाडम्बरम् ।
गृहाण नवकाञ्चन-प्रभवदण्ड-खण्डोज्ज्वलं
महात्रिपुर-सुन्दरि प्रकटमातपत्रं महत् ।।१५।।
मातस्त्वन्मुदमातनोतु सुभगस्त्रीभिः सदाऽऽन्दोलितं
शुभ्रं चामरमिन्दुकुन्दसदृशं प्रस्वेददुःखापहम् ।
सद्योऽगस्त्य-वसिष्ठ-नारद-शुक-व्यासादि-वाल्मीकिभिः
स्वे चित्ते क्रियमाण एव कुरुतां शर्माणि वेदध्वनिः ।।१६।।
स्वर्गाङ्गणे वेणु-मृदङ्ग-शङ्ख-भेरी-निनादैरुपगीयमाना ।
कोलाहलैराकलिता तवाऽस्तुविद्याधरी-नृत्यकलासुखाय ।।१७।।
देवि भक्तिरसभावितवृत्ते प्रीयतां यदि कुतोऽपि लभ्यते ।
तत्र लौल्यमपि सत्फलमेकं जन्मकोटिभिरपीह न लभ्यम् ।।१८।।
एतैः षोडशभिः पद्यैरुपचारोपकल्पितैः ।
यः परां देवतां स्तौति स तेषां फलमाप्नुयात् ।।१९।।

*इति श्रीदुर्गा-मानस-पूजा समाप्ता ।*

●

## श्रीदुर्गाष्टोत्तर-शतनाम-स्तोत्रम्

*ईश्वर उवाच*

शतनाम प्रवक्ष्यामि शृणुष्व कमलानने ।
यस्य प्रसादमात्रेण दुर्गा प्रीता भवेत् सती ।।१।।

ॐ सती साध्वी भवप्रीता भवानी भवमोचनी ।
आर्या दुर्गा जया चाद्या त्रिनेत्रा शूलधारिणी ।।२।।
पिनाकधारिणी चित्रा चण्डघण्टा महातपाः ।
मनो-बुद्धिरहङ्कारा चित्तरूपा चिता चितिः ।।३।।
सर्वमन्त्रमयी सत्ता सत्यानन्दस्वरूपिणी ।
अनन्ता भाविनी भाव्या भव्याऽभव्या सदागतिः ।।४।।
शाम्भवी देवमाता च चिन्ता रत्नप्रिया सदा ।
सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी ।।५।।
अपर्णानेकवर्णा च पाटला पाटलावती ।
पट्टाम्बरपरीधाना कलमञ्जीररञ्जिनी ।।६।।
अमेयविक्रमा क्रूरा सुन्दरी सुरसुन्दरी ।
वनदुर्गा च मातङ्गी मतङ्गमुनिपूजिता ।।७।।
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ।
चामुण्डा चैव वाराही लक्ष्मीश्च पुरुषाकृतिः ।।८।।
विमलोत्कर्षिणी ज्ञाना क्रिया नित्या च बुद्धिदा ।
बहुला बहुलप्रेमा सर्ववाहनवाहना ।।९।।
निशुम्भ-शुम्भहननी महिषासुरमर्दिनी ।
मधुकैटभहन्त्री च चण्ड-मुण्डविनाशिनी ।।१०।।
सर्वाऽसुरविनाशा च सर्वदानवघातिनी ।
सर्वशास्त्रमयी सत्या सर्वास्त्रधारिणी तथा ।।११।।
अनेकशस्त्रहस्ता च अनेकास्त्रस्य धारिणी ।
कुमारी चैककन्या च कैशोरी युवती यतिः ।।१२।।
अप्रौढा चैव प्रौढा च वृद्धमाता बलप्रदा ।
महोदरी मुक्तकेशी घोररूपा महाबला ।।१३।।

अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी ।
नारायणी भद्रकाली विष्णुमाया जलोदरी ॥१४॥
शिवदूती कराली च अनन्ता परमेश्वरी ।
कात्यायनी च सावित्री प्रत्यक्षा ब्रह्मवादिनी ॥१५॥
य इदं प्रपठेन्नित्यं दुर्गानामशताष्टकम् ।
नासाध्यं विद्यते देवि त्रिषु लोकेषु पार्वति ॥१६॥
धनं धान्यं सुतं जायां हयं हस्तिनमेव च ।
चतुर्वर्गं तथा चाऽन्ते लभेन्मुक्तिं च शाश्वतीम् ॥१७॥
कुमारीं पूजयित्वा तु ध्यात्वा देवीं सुरेश्वरीम् ।
पूजयेत् परया भक्त्या पठेन्नामशताष्टकम् ॥१८॥
तस्य सिद्धिर्भवेद् देवि सर्वैः सुरवरैरपि ।
राजानो दासतां यान्ति राज्यश्रियमवाप्नुयात् ॥१९॥
गोरोचना-ऽलक्तक-कुङ्कुमेन
सिन्दूर-कर्पूर-मधुत्रयेण ।
विलिख्य यन्त्रं विधिना विधिज्ञो
भवेत् सदा धारयते पुरारिः ॥२०॥
भौमावास्यानिशामग्रे चन्द्रे शतभिषां गते ।
विलिख्यं प्रपठेत् स्तोत्रं स भवेत् सम्पदां पदम् ॥२१॥

*इति श्रीविश्वसारतन्त्रे दुर्गाष्टोतरशतनामस्तोत्रं समाप्तम् ।*



## सप्तश्लोकी दुर्गा

*शिव उवाच*

देवि त्वं भक्तसुलभे सर्वकार्यविधायिनी ।
कलौ हि कार्यसिद्ध्यर्थमुपायं ब्रूहि यत्नतः ॥

*देव्युवाच*

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम् ।
मया तवैव स्नेहेनाऽप्यम्बास्तुतिः प्रकाश्यते ।।

ॐ अस्य श्रीदुर्गा-सप्तश्लोकीस्तोत्र-मन्त्रस्य नारायण ऋषिः, अनुष्टुप् छन्दः, श्रीमहाकाली-महालक्ष्मी-महासरस्वत्यो देवताः, श्रीदुर्गा-प्रीत्यर्थं सप्तश्लोकीदुर्गापाठे विनियोगः ।

ॐ ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ।।१।।
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्य-दुःखभय-हारिणी का त्वदन्या
सर्वोपकार-करणाय सदाऽर्द्रचित्ता ।।२।।
सर्वमङ्गल-मङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।।३।।
शरणागत-दीनार्त-परित्राण-परायणे ।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ।।४।।
सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।५।।
रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान् सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ।।६।।
सर्वाबाधा-प्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्-वैरिविनाशनम् ।।७।।

*इति सप्तश्लोकी दुर्गा सम्पूर्णा ।*



## दुर्गा-द्वात्रिंशन्नाम-माला

दुर्गा दुर्गतिशमनी दुर्गापद्-विनिवारिणी ।
दुर्गमच्छेदिनी दुर्ग-साधिनी दुर्ग-नाशिनी ॥१॥
दुर्गतोद्धारिणी दुर्गनिहन्त्री दुर्गमापहा ।
दुर्गम-ज्ञानदा दुर्ग-दैत्यलोक-दवानला ॥२॥
दुर्गमा दुर्गमालोका दुर्गमात्मस्वरूपिणी ।
दुर्गमार्गप्रदा दुर्गमविद्या दुर्गमाश्रिता ॥३॥
दुर्गम-ज्ञान-संस्थाना दुर्गम-ध्यान-भासिनी ।
दुर्गमोहा दुर्गमगा दुर्गमार्थस्वरूपिणी ॥४॥
दुर्गमासुरसंहन्त्री दुर्गमायुधधारिणी ।
दुर्गमाङ्गी दुर्गमता दुर्गम्या दुर्गमेश्वरी ॥५॥
दुर्गभीमा दुर्गभामा दुर्गभा दुर्गदारिणी ।
नामावलिमिमां यस्तु दुर्गाया मम मानवः ।
पठेत् सर्वभयान् मुक्तो भविष्यति न संशयः ॥६॥

*इति दुर्गा-द्वात्रिंशन्नाम-माला समाप्ता ।*

## श्रीसूक्तम्

*ध्यानम्*

अरुण-कमलसंस्था तद्रजःपुञ्जवर्णा
कर-युगल-धृतेष्टा-ऽभीति-युग्माम्बुजा च ।
मणिमय-मुकुलाढ्या-ऽलंकृता कल्पजालै-
र्भवतु भुवनमाता सन्ततं श्रीः श्रियै नः ॥

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम् ।
चन्द्रां हिरणमयीं लक्ष्मीं जातवेदो म आवह ॥१॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥
अश्वपूर्वां रथमध्यां हस्तिनाद-प्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥

कां सोऽस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनेमिं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या ऽअलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतो सुराष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥
मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
कर्दमेन प्रजाभूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

*इति श्रीसूक्तं समाप्तम् ।*

# देवी-पुष्पाञ्जलि-स्तोत्रम्

अयि गिरि-नन्दिनि नन्दितमेदिनि विश्व-विनोदिनी नन्दिनुते
गिरिवर-विन्ध्य-शिरोऽधि-निवासिनि विष्णुविलासिनि जिष्णुनुते ।
भगवती हे शितिकण्ठ-कुटुम्बिनि भूरिकुटुम्बिनि भूतिकृते
जय जय हे महिषासुर-मर्दिनि ! रम्यकंपर्दिनी ! शैलसुते ! ।।१।।

सुरवरवर्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते
त्रिभुवनपोषिणि शङ्करतोषिणि कल्मषमोषिणि घोषरते ।
दनुज-निरोषिणि दुर्मद-शोषिणि दुर्मुनि-रोषिणि सिन्धुसुते
जय जय हे महिषासुर-मर्दिनि रम्यकपर्दिनि शैलसुते ।।२।।

अयि जगदम्ब ! कदम्ब-वन-प्रियवासिनि तोषिणि हासरते
शिखरि-शिरोमणि-तुङ्गहिमालय-श्रृङ्ग-निजालय-मध्यगते ।
मधु-मधुरे मधु-कैटभ-गञ्जिनि महिषविदारिणि रासरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।३।।

अयि निजहुंकृति मात्रनिराकृत-धूम्रविलोचन-धूम्रशते
समर-विशोषित-रोषित-शोणित-बीजसमुद्भव-बीजलते ।
शिव-शिव शुम्भ-निशुम्भ-महाहव-तर्पित-भूत-पिशाचरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि !शैलसुते ! ।।४।।

अयि शतखण्ड-विखण्डित-रुण्ड-वितुण्डित-शुण्ड-गजाधिपते
निज-भुजदण्ड-निपातित-चण्ड-विपाटित-मुण्ड-भटाधिपते ।
रिपुगजगण्ड-विदारण-चण्ड-पराक्रम-शौण्ड-मृगाधिपते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।५।।

धनुरनुषङ्ग-रणक्षणसङ्ग-परिस्फुरदङ्ग-नटत्कटके
कनक-पिशङ्ग-पृषत्कनिषङ्ग-रसद्भटश्रृङ्ग-हताबटुके ।
हत-चतुरङ्ग-बल-क्षितिरङ्ग-घटद्-बहुरङ्ग-रटद्-बटुके
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।६।।

अयि रणदुर्मद-शत्रुवधद्धुर-दुर्धर-निर्भर-शक्तिभृते
चतुर-विचार-धुरीण-महाशय-दूतकृत-प्रमथाधिपते ।
दुरित-दुरीह-दुराशय-दुर्मति-दानवदूत-दुरन्तगते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥७॥
अयि शरणागत-वैरिवधू-जन-वीरवराभव-दायिकरे
त्रिभुवन-मस्तक-शूलविरोधि-शिरोधि-कृतामल-शूलकरे ।
दुमि-दुमितामर-दुन्दुभिनाद-मुहुर्मुखरीकृत-दिङ्निकरे
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥८॥
सुरललना-ततथेयित-थेयित-थाभिनयोत्तर-नृत्यरते
कृतकुकुथा-कुकुथोदि-डदाडिक-ताल-कुतूहल-गानरते ।
धुधुकुट-धूधुट-धिन्धि-मितध्वनि-धीर-मृदङ्ग-निनादरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥९॥
जय जय जाप्यजये जयशब्द-परस्तुति-तत्पर-विश्वनुते
झणझण-झिंझिम-झिंकृत-नूपुर-शिञ्जित-मोहित-भूतपते ।
नटित-नटार्ध-नटीनटनायक-नाट-ननाटित-नाट्यरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१०॥
अयि सुमनः-सुमनः-सुमनः-सुमनः-सुमनोरम-कान्तियुते
श्रितरजनी-रजनी-रजनी-रजनी-रजनीकर-वक्त्रभृते ।
सुनयन-विभ्रमर-भ्रमर-भ्रमर-भ्रमर-भ्रमराभिदृते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥११॥
महित-महाहव-मल्ल-मतल्लिक-वल्लित-रल्लित-भल्लिरते
विरचित-वल्लि-कपालिक-पल्लिक-झिल्लिक-भिल्लिक-वर्गवृते ।
श्रुतकृतपुल्ल-समुल्लसितारुण-तल्लज-पल्लव-सल्ललिते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१२॥
अयि सुदतीजन-लालस-मानस-मोहन-मन्मथ-राजसुते ।
अविरल-गण्डगलन्-मदनेदुर-मत्त-मत्तङ्गजराजगते

त्रिभुवन-भूषण-भूतकलानिधि-रूप-पयोनिधि-राजसुते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१३॥
कमलदलामल-कोमलकान्ति-कलाकलितामल-भालतले
सकल-दलामल-कोमलकान्ति-कलाकलितामल-भालतले
सकल-विलास-कलानिलय-क्रम-केलि-चलत्-कलहंस-कुले
अलिकुल-सङ्कुल-कुन्तल-मण्डल-मौलिमिलद्-बकुलालिकुले
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१४॥
करमुरलीरव-वर्जित-कूजित-लज्जित-कोकिल-मञ्जुमते
मिलित-मिलिन्द-मनोहर-गुञ्जित-रञ्जित-शैल-निकुञ्जगते ।
निजगणभूत-महाशबरीगण-रङ्गण-सम्भृत-केलिरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१५॥
कटितट-पीत-दुकूल-विचित्र-मयूख-तिरस्कृत चण्डरुचे
जित-कनकाचल-मौलि-मदोर्जित-गर्जित-कुञ्जर-कुम्भकुचे ।
प्रणत-सुराऽसुर-मौलिमणि-स्फुरदंशु-लसन्नख-चन्द्ररुचे
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१६॥
विजित-सहस्र-करैक-सहस्र-करैक-सहस्रकरैकनुते
कृत-सुरतारक-सङ्गरतारक-सङ्गरतारक-सूनुनुते ।
सुरथ-समाधि-समान-समाधि-समान-समाधि-सुजाप्यरते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१७॥
पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं सुशिवे
अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् ।
तव मदमेव परं पदमस्त्विति शीलयतो मम किं न शिवे
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ॥१८॥
कनक-लसत्-कलशीकजलै-रनुषिञ्चति तेऽङ्गण-रङ्गभुवम्
भजति स किं न शची-कुच-कुम्भ-तटी-परिरम्भ-सुखानुभवम् ।

तव चरणं शरणं करवाणि सुवाणि पथं मम देहि शिवम्
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।१९।।
तव विमलेन्दुकलं वदनेन्दुमलं कलयन्ननुकूलयते
किमु पुरुहूत-पुरीन्दुमुखी-सुमुखीभिरसौ विमुखीक्रियते ।
मम तु मतं शिवमानधने भवती कृपया किमु न क्रियते
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।२०।।
अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननीति यथाऽसि मयाऽसि तथाऽनुमतासि रमे ।
यदुचितमत्र भवत्पुरगं कुरु शाम्भवि देवि दयां कुरु मे
जय जय हे महिषासुर-मर्दिनि ! रम्यकपर्दिनि ! शैलसुते ! ।।२१।।
स्तुतिमिमां स्तिमितः सुसमाधिना नियमतो यमतोऽनुदिनं पठेत् ।
परमया रमया स निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत् ।।२२।।

*इति देवी-पुष्पाञ्जलि-स्तोत्रं समाप्तम् ।*

# देवी की आरती

जगजननी जय ! जय !! (मा ! जगजननी जय ! जय !!)
भयहारिणि, भवतारिणि भवभामिनि जय ! जय !! जग०
तू ही सत्-चित् सुखमय शुद्ध ब्रह्मरूपा ।
सत्य सनातन सुन्दर पर-शिव सुर-भूपा ।।१।।जग०
आदि अनादि अनामय अविचल अविनाशी ।
अमल अनन्त अगोचर अज आनन्दराशी ।।२।।जग०
अविकारी अघहारी, अकल, कलाधारी ।
कर्त्ता विधि, भर्त्ता हरि हर संहारकारी ।।३।।जग०
तू विधिवधू, रमा तू, तू उमा, महामाया ।
मूलप्रकृति विद्या तू, तू जननी, जाया ।।४।।जग०

राम, कृष्ण तू, सीता, व्रजरानी राधा! ।
तू वांछा-कल्पद्रुम, हारिणि सब बाधा ।।५।।जग०
दश विद्या, नवदुर्गा, नाना शस्त्रधरा ।
अष्टमातृका, योगिनि, नव-नव रूप धरा ।।६।।जग०
तू परमधाम-निवासिनि, महाविलासिनि तू ।
तू ही श्मशान-विहारिणि, ताण्डव-लासिनि तू ।।७।।जग०
सुर-मुनि-मोहिनि सौम्या तू शोभाऽऽधारा ।
विवसन विकट-स्वरूपा, प्रलयमयी धारा ।।८।।जग०
तू ही स्नेहसुधामयि, तू अति गरलमना ।
रत्नविभूषित तू ही, तू ही अस्थि-तना ।।९।।
मूलाधार-विनासिनि, इह-पर-सिद्धिप्रदे ।
कालातीता काली, कमला तू वरदे ।।१०।।जग०
शक्ति शक्तिधर तू ही, नित्य अभेदमयी ।
भेदप्रदर्शिनि वाणी विमले! वेदत्रयी ।।११।।जग०
हम अति दीनदुखी माँ! विपत-जाल घेरे ।
हैं कपूत अति कपटी, पर बालक तेरे ।।१२।।जग०
निज स्वभाववश जननी! दयादृष्टि कीजै ।
करुण कर करुणामयि! चरण-शरण दीजै ।।१३।।जग०

●

## देवी-नीराजनम्

जय अम्बे गौरी, मैया जय श्यामे गौरी ।
मैया जय मंगलकरणी, मैया जय आनन्दकरणी ।।
तुमको निशिदिन ध्यावत, हरि ब्रह्मा शिवरी ।।१।। जय अम्बे०
माँग सिन्दूर विराजत, टीको मृगमद को ।। मैया टीको०

उज्ज्वल से दोऊ नैना, चन्द्रवदन नीकौ ।।२।। जय अम्बे०
कनक समान कलेवर, रक्ताम्बर राजै ।। मैया रक्ता०
रक्त पुष्प गल माला, कण्ठन पर साजै ।।३।। जय अम्बे०
केहरि वाहन राजत, खड्ग खप्पर धारी ।। मैया खड्ग०
सुर नर मुनि जन सेवत, तिनके दुःख हारी ।।४।। जय अम्बे०
कानन कुण्डल शोभित, नासाग्रे मोती ।। मैया नासा०
कोटिक चन्द्र दिवाकर, राजत सम ज्योति ।।५।। जय अम्बे०
शुम्भ-निशुम्भ विदारे, महिषासुर घाती ।। मैया महिषा०
धूम्र विलोचन नैना, निशिदिन मदमाती ।।६।। जय अम्बे०
चण्ड-मुण्ड संहारे, शोणित बीज हरे ।। मैया शोणित०
मधु-कैटभ दोऊ मारे, सुर भयहीन करे ।।७।। जय अम्बे०
ब्रह्माणी रुद्राणी, तुम कमला रानी ।। मैया तुम०
आगम निगम बखानी, तुम शिव पटरानी ।।८।। जय अम्बे०
चौंसठ योगिनी गावत, नृत्य करत भैरूँ ।। मैया नृत्य०
बाजत ताल मृदंगा, और बाजे डमरू ।।९।। जय अम्बे०
तुम ही जग की माता, तुम ही हो भरता ।। मैया तुम०
भक्तन की दुःख हरता, सुख-सम्पति करता ।।१०।। जय अम्बे०
भुजा चार अति शोभित वरहु अभयधारी ।। मैया वर०
मन वांछित फल पावत, सेवत नर नारी ।।११।। जय अम्बे०
कंचन थाल विराजत, अगर कपुर बाती ।। मैया अगर०
श्री मालकेतु में राजत, कोटिरत्न ज्योति ।।१२।। जय अम्बे०
ये अम्बे जी की आरति, जो कोई नर गावैं ।। मैया जो०
कहत शिवानन्द स्वामी, सुख-सम्पति पावैं ।।१३।। जय अम्बे०

# देव्यपराध-क्षमापन-स्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जानेस्तुति-कथाः ।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुशरणं क्लेशहरणम् ॥१॥
विधेरज्ञानेन द्रविण - विरहेणा - ऽलसतया
विधेयाऽशक्यत्वात् तव चरणयोर्या च्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥
पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥३॥
जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि! द्रविणमपि भूयस्तव मया ।
तथाऽपि त्वं स्नेहं मयि निरुपमं यत् प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥४॥
परित्यक्ता देवा विविध-विधि-सेवाकुलतया
मया पञ्चाशीतेरधिकमपनीते तु वयसि ।
इदानीं चेन्मातस्तव यदि कृपा नाऽपि भविता
निरालम्बो लम्बोदर-जननि कं यामि शरणम् ॥५॥

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्को रङ्को विहरति चिरं कोटि-कनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ॥६॥
चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली-भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणि-ग्रहण-परिपाटी-फलमिदम् ॥७॥
न मोक्षस्याऽऽकांक्षा भव-विभव-वाञ्छाऽपि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छाऽपि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥८॥
नाऽऽराधिताऽसि विधिना विविधोपचारैः
किं रुक्ष-चिन्तन-परैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपामुचितमम्ब ! परं तवैव ॥९॥
आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णविशि ।
नैतच्छठत्वं मम भावयेथाः क्षुधा-तृषार्ता जननीं स्मरन्ति ॥१०॥
जगदम्ब! विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि ।
अपराध-परम्परावृतं न हि माता समुपेक्षते सुतम् ॥११॥
मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि ! यथायोग्यं तथा कुरु ॥१२॥

*इति देव्यपराध-क्षमापन-स्तोत्रं सम्पूर्णम् ।*

# देव्यपराधक्षमापनम्

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ! ॥१॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैन न जानामि क्षम्यतां परमेश्वरि ! ॥२॥
यद्दतं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद् गृहाणाऽनुकम्पया ॥३॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ! ।
यत्पूजितं मया देवि ! परिपूर्णं तदस्तु मे ॥४॥
अपराधशतं कृत्वा जगदम्बेति चोच्चरेत् ।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥५॥
अज्ञानाद् विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ।
तत्सर्वं क्षम्यतां देवि ! प्रसीद परमेश्वरि ! ॥६॥
कामेश्वरि ! जगन्मातः सच्चिदानन्दविग्रहे ।
गृहाण त्वं स्तुतिमिमां प्रसीद परमेश्वरि ! ॥७॥
गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ।
आगता सुखसम्पत्तिः पुण्याच्च तव दर्शनात् ॥८॥
यदत्र पाठे जगदम्बिके ! मया
विसर्ग-बिन्द्वक्षर-हीनमीरितम् ।
तदस्तु सम्पूर्णतमं प्रसादतः
सङ्कल्पसिद्धिश्च सदैव जायताम् ॥९॥
मोहादज्ञानतो वा पठितमपठितं
साम्प्रतं ते स्तवेऽस्मिन् ।

तत्सर्वं साङ्गमास्तां भगवति वरदे!
त्वत्प्रसादात् प्रसीद ॥१०॥
यस्याऽर्थं पठितं स्तोत्रं तवेदं शङ्करप्रिये ।
तस्य देहस्य गेहस्य शान्तिर्भवतु सर्वदा ॥११॥

*इति दुर्गार्चनपद्धतौ देव्यपराधक्षमापनं समाप्तम्।*

●

## शतचण्डी-सहस्रचण्डी-यज्ञानुक्रमणी

नित्यकर्म विधायैव प्रायश्चित्तं समाचरेत् ।
गणेशं पूजयेदादौ स्वस्तिवाचनपूर्वकम् ॥१॥
मातॄणां पूजनं कार्यं नान्दीश्राद्धमतः परम् ।
आचार्यमथ वृत्वैव ब्रह्माणं गाणपत्यकम् ॥२॥
सदस्यमुपद्रष्टारमृत्विजो वृणुयात्ततः ।
प्रवेशनं मण्डपस्य तावद् दिग्-रक्षणं पुनः ॥३॥
ततो मण्डपपूजादि ग्रहादिस्थापनं ततः ।
देवता-ग्रह-होमं च पूर्वाङ्गमिति कथ्यते ॥४॥
पूजास्विष्टं नवाहुत्यो बलिः पूर्णाहुतिस्तथा ।
संस्रवादि विमोकान्तं होमशेषं समापयेत् ॥५॥
पूर्णपात्रादिदानं च गोदानं च ततः परम् ।
श्रेयो मण्डपदानादि ह्यभिषेको विसर्जनम् ॥६॥
विप्रेभ्यो दक्षिणां दत्वा भोजयेद् विधिपूर्वकम् ।
शुभाशीर्ग्रहणं कुर्यादुत्तराङ्गक्रमो ह्ययम् ॥७॥

*इति शतचण्डी-सहस्रचण्डी-यज्ञानुक्रमणी समाप्ता।*

●

## वेदी-क्रम:

आग्नेय्यां मातृकावेदी वास्तुवेदी च नैर्ऋते ।
वायव्यां क्षेत्रपालस्य ईशान्यां तु नवग्रहा: ।।

-कुण्डरत्नावली

## नवग्रहचक्र-स्वरूपम्

वृत्तमण्डलमादित्यमर्धचन्द्रं निशाकरम् ।
त्रिकोणं मङ्गलं चैव बुधं च धनुषाकृतिम् ।।१।।
गुरुमष्टदलं प्रोक्तं चतुष्कोणं च भार्गवम् ।
नराकृतिं शनिं विन्द्याद् राहुं च मकराकृतिम् ।
केतुं खड्गसमं ज्ञेयं ग्रहमण्डलके शुभे ।।२।।

अपि च -

वृत्तमण्डलमादित्यं चतुरस्रं निशाकरम् ।
त्रिकोणं मङ्गलं चैव बुधं वै बाणसन्निभम् ।।१।।
गुरवे पट्टिशाकारं पञ्चकोणं भृगुं तथा ।।२।।
मन्दे च धनुषाकारं सूर्पाकारं तु राहवे ।
केतवे च ध्वजाकारं मण्डलानि क्रमेण तु ।।३।।

# शतचण्डी-पूजन-हवन-सामग्री

२.२५ रोली
०.२५ मौली
धूपबत्ती २ पैकेट
केशर ४ मासा
१.२५ कपूर
०.१५ रूई
०.२५ अबीर (गुलाल)
०.२५ बुक्का (अभ्रक)
०.५० सिन्दूर
चावल ५ सेर
पान २५ प्रतिदिन
सुपारी बड़ी ३ सेर
पेड़ा ऽ।। सेर प्रतिदिन
बताशा १। सेर
ऋतुफल (१ दर्जन प्रतिदिन)
गोबर, गोमूत्र
दुग्ध ऽ।। सेर (प्रतिदिन)
दही १ पाव प्रतिदिन
घृत १। पाव
चीनी ऽ।
शहद आधा पाव
यज्ञोपवीत २५
अतर १ शीशी
गुलाब जल १ शीशी
पञ्चमेवा ऽ।। सेर
मिश्री ऽ।। सेर
पुष्प छुट्टा प्रतिदिन

माला १५ प्रतिदिन
कुशा, गंगाजल
तुलसी, दूर्वा
बिल्वपत्र प्रतिदिन
१.०० इलायची छोटी
१.०० लवंग
०.५० जावित्री
जायफल ४
नारियल ८
गिरिगोला ५
०.५० लालरंग
०.५० पीला रंग
०.५० हरा रंग
०.५० काला रंग
पञ्च पल्लव
(आम, गुलर, पाकर, वट, पीपल)
पञ्च रत्न की पुड़िया ५
(सोना, हीरा, मोती, पुखराज, नीलम)

**सर्वौषधि** -
०.१५ मुरा
०.१५ जटमांसी
०.१५ वच
०.१५ कूट
०.१५ शिलाजीत
०.१५ आमा हल्दी, दारु हल्दी

०.१५ सटी (कचूर)
०.१५ चम्पा
०.१५ नागर मोथा
सप्त मृत्तिका
(हाथी के स्थान की, घोड़े की स्थान की, बल्मीक (दीमक) की मिट्टी, नदी संगम की, तालाब की, गोशाला की, राजद्वार (चौराहा) की मिट्टी)
०.२५ मेंहदी पीसी
०.२५ हल्दी पीसी
०.२५ सुरुआरी का बीया
०.२५ काली मिर्च
०.१५ गुरुच
०.१५ पीली सरसों
०.२५ लाल चन्दन
अनार २
खोआ ऽ।।
तेल सुगन्धित ऽ।
काला उड़द ऽ।।
पापड़ २५
काठ की चौकी ५
काठ का पाटा ३
लोहे की कँटिया ४
केले के खम्भे ८
कम्बल १
सूत की डोरी १० हाथ
नवग्रह की लकड़ी –
(मदार की १०८, पलाश की १०८, खैर की १०८, अपामार्ग की १०८, पीपल की १०८, गूलर की १०८, शमी की लकड़ी १०८)
दूर्वा १०८
कुशा १०८
कलश-ताँबे या पीतल का ५
चाँदी या ताँबे का कलश १
कमण्डलु १
थाली मुरादाबादी १
थाली काँसे की १
कटोरा काँसे का बड़ा १
तस्तरी ५
काँसे की कटोरी २
(छायापात्र के लिए)
पूर्णपात्र (भगोना) १
भगोना खीर पकाने का १
कलछुल पीतल का १
आरतीदानी १
धूपदानी १
घंटा १, घड़ौल १, शंख १
रेशमी साड़ी १ (दुर्गाजी के लिए)
रेशमी ओढ़नी (दुर्गाजी के लिए)
कब्जा १
चुनरी १

धोती ७
अँगोछा ७
सफेद कपड़ा ३ गज
लाल कपड़ा १। गज
बन्दनवार १
पञ्चरंगा ध्वजा १
पञ्चरंगा चँदवा बड़ा १
चँदवा छोटा १
सौभाग्य पिटारी १
शीशा १, कंघी १
दुर्गा की फोटो बड़ी १
दुर्गाजी की मूर्ति सुवर्ण की १
सोने की नथिया १ (१।। तोले की)
चाँदी का सिंहासन १
चाँदी की छतरी १
चाँदी की चँवर १
चाँदी की धूपदानी १
चाँदी की आरतीदानी १
चाँदी की तस्तरी १
चाँदी की कटोरी १
चाँदी का पञ्चपात्र १
चाँदी की आचमनी १
चाँदी का अर्घा १
चाँदी का तष्टा १
चाँदी का चौकोर पत्र १
(१६ अँगुल लम्बा-चौड़ा)

**वरण सामग्री -**

धोती ११, दुपट्टा ११
अँगोछा ११, लोटा ११
गिलास ११, पञ्चपात्र ११
आचमनी ११
गोमुखी ११
माला ११
यज्ञोपवीत ११,
खड़ाऊँ ११
दुर्गा की पुस्तक ११
आसन ११

**हवन सामग्री -**

तिल २५ सेर
चावल १२।। सेर
यव ६। सेर
चीनी ३ सेर
घृत ५ सेर
पञ्चमेवा ऽ।।
कमलगट्टा ऽ।।
गुंगुल १। पाव
भोजपत्र १। पाव
चन्दन का चूरा ऽ।।
आम की लकड़ी २ मन

*इति शतचण्डी-हवन-पूजन-सामग्री समाप्त।*

---

**विशेष**-यह सामग्री शतचण्डी की है। सहस्रचण्डी, लक्षचण्डी एवं कोटिचण्डी में उत्तरोत्तर हवन, वरण एवं देय द्रव्य में वृद्धि कर लेनी चाहिए।

# श्रीदेव्यथर्वशीर्षम्[1]

ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति ।।१।।

साब्रवीत्- अहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषत्मकं जगत् । शून्यं चाशून्यं च ।।२।।

अहमानन्दानानन्दौ । अहं विज्ञानाविज्ञाने । अहं ब्रह्मा-ब्रह्मणी वेदितव्ये । अहं पञ्चभूतान्यपञ्चभूतानि । अहमखिलं जगत् ।।३।।

वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् । अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् ।।४।।

अहं रुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणावुभौ बिभर्मि । अहमिन्द्राग्नी अहमश्विनावुभौ ।।५।।

अहं सोमं त्वष्टारं पूषणं भगं दधामि । अहं विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ।।६।।

अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते । अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे । य एवं वेद । स दैवीं सम्पदमाप्नोति ।।७।।

ते देवा अब्रुवन् –

---

१. अथर्ववेद में देव्यथर्वशीर्ष पाठ का विशेष फल वर्णित है । इसके नित्यप्रति पाठ से देवी की कृपा शीघ्र प्राप्त होती है । यद्यपि सप्तशती पाठ का अङ्ग निश्चित कर कहीं इसका उल्लेख नहीं है, फिर भी सप्तशती पाठ से पहले इसका पाठ कर लेना अत्यधिक फलदायक सिद्ध होगा ।

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।।८।।
तामग्निवर्णां तपसा ज्वलन्तीं
वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणं प्रपद्या-
महेऽसुरान्नाशयित्र्यै ते नमः ।।९।।
देवीं वाचमजनयन्त देवा-
स्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुप सुष्टुतैतु ।।१०।।
कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ।।११।।
महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि ।
तन्नो देवी प्रचोदयात् ।।१२।।
अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव ।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ।।१३।।
कामो योनिः कमला वज्रपाणि-
र्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च
पुरूच्यैषा विश्वमातादिविद्योम् ।।१४।।

एषाऽऽत्मशक्तिः । एषा विश्वमोहिनी । पाशाङ्कुश-धनुर्बाणधरा । एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति ।।१५।।

नमस्ते अस्तु भगवति मातरस्मान् पाहि सर्वतः ।।१६।।

सैषाऽष्टौ वसवः। सैषैकादश रुद्राः। सैषा द्वादशादित्याः । सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरजस्तमांसि । सैषा ब्रह्मविष्णुरुद्ररूपिणी । सैषा प्रजापतीन्द्रमनवः । सैषा ग्रहनक्षत्रज्योतींषि । कलाकाष्ठादिकालरूपिणी । तामहं प्रणौमि नित्यम् ।

पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् ।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ।।१७।।
वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् ।
अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ।।१८।।
एवमेकाक्षरं ब्रह्म यतपः शुद्धचेतसः ।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ।।१९।।
वाङ्माया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितम् ।
सूर्योऽवामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः ।
नारायणेन संमिश्रो वायुश्चाधरयुक् ततः ।
विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ।।२०।।
हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् ।
पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ।
त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ।।२१।।
नमामि त्वां महादेवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ।।२२।।

यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते अज्ञेया । यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता ।

यस्या लक्ष्यं नोपलक्ष्यते तस्मादुच्यते अलक्ष्या। यस्या जननं नोपलभ्यते तस्मादुच्यते अजा। एकैव सर्वत्र वर्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यते अज्ञेयानन्तालक्ष्याजैका नैकेति ।।२३।।

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी।
यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।।२४।।
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्।
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ।।२५।।

इदमथर्वशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमाप्नोति। इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति-शतलक्षं प्रजप्त्वाऽपि सोऽर्चासिद्धिं न विन्दति।
शतमष्टोत्तरं चाऽस्य पुरश्चर्याविधिः स्मृतः।
दशवारं पठेद् यस्तु सद्यः पापैः प्रमुच्यते।
महादुर्गाणि तरति महादेव्याः प्रसादतः ।।२६।।

सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायं प्रातः प्रयुञ्जानो अपापो भवति। निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति। प्राण-प्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति। भौमाश्विन्यां महादेवीसन्निधौ जप्त्वा महामृत्युं तरति। स महामृत्युं तरति य एवं वेद।

*इति देव्यथर्वशीर्षं समाप्तम्।*

## सप्तशती-द्वारा-प्रश्नोत्तर-ज्ञानम्

सम्पूज्य विधिवद् देवीं कुमारीं रूपधारिणीम् ।
कृत्वाऽष्टदलमुर्वीस्थं तत्र तत्पुस्तकं न्यसेत् ॥१॥

पूजितायाः करे दद्यात् कन्यकायास्तु मुद्रिकाम् ।
शलाकां हेममय्यां च गजदन्तस्य वा शुभाम् ॥२॥

द्वादशाङ्गुलमात्रां तु विन्यसेत् पुस्तकान्तरे ।
सम्पश्येत् प्रथमां पङ्क्तिं यत्स्वरूपं कथानकम् ।
आदिशेत् तत्स्वरूपं हि फलं शास्त्रविशारदः ॥३॥

*इति सप्तशती-द्वारा-प्रश्नोत्तरज्ञानं समाप्तम् ।*

---

सप्तशती द्वारा प्रश्नोत्तर विचार – साधक को चाहिए कि, सर्वप्रथम देवीस्वरूपा कुमारी कन्या का विधिवत् गन्ध, अक्षत, पुष्प आदि से पूजन कर, पृथ्वी पर अष्टदल कमल का निर्माण कर, उस पर दुर्गा-सप्तशती की पुस्तक को स्थापित करे ॥१॥ तत्पश्चात् उस कन्या के हाथ में सुवर्ण मुद्रिका (सोने की अँगूठी) तथा सुवर्णशलाका (सोने की सलाई) अथवा हाथी दाँत की सलाई रखे ॥२॥ अनन्तर दुर्गा-सप्तशती के पुस्तक को खोलकर उसके मध्य निर्माण करे, अर्थात् बारह अंगुल सीमित स्थान पर बारह रेखाएँ खींच कर प्रथम रेखा में बारह अंगुल मात्रा की पंक्ति के अनुसार उसका जो भी स्वरूप एवं कथानक-श्लोक में आये तदनुसार शास्त्र-विशारद साधक उसका फल प्रश्नकर्ता को बताये ॥३॥

*इस प्रकार सप्तशती-द्वारा प्रश्नोत्तर-विचार समाप्त ।*

# ग्रन्थकारसंस्तवः

देवरिया-जनपदके ख्याते ग्रामे मझौलिकाऽभिख्ये ।
उद्भटशूरा मल्ला यत्राऽऽसन् विश्वविख्याताः ॥ १ ॥
विद्या-सदाचारगुण-प्रसिद्धा लोकद्वयी साधनकर्मसिद्धाः ।
यत्राऽभवँल्लोक-ललामभूता, विप्रा जगद्वन्दित-पादपद्माः ॥ २ ॥
पितामहोऽभून्मम लोकवित्तः, **श्रीकान्त**नामा-ऽऽगममर्म-विज्ञः ।
तदात्मजौ द्वौ परमाऽर्थनिष्ठौ, जातौ प्रतीक्ष्याऽर्चनरक्तचितौ ॥ ३ ॥
**श्रीसन्तशरण**नामा ज्यायानासीन्नितान्त-विख्यातः ।
शास्त्राऽनुशीलनपरः शुभकर्मपरायणः सततम् ॥ ४ ॥
**श्रीसत्यनारायण**नामधेय आसीत्कनीयाञ्शुभभागधेयः ।
द्वावप्यभूतां पितृभक्तिभाजौ, लोकोपकारे परमप्रवीणौ ॥ ५ ॥
**श्रीसन्तशरण**विदुषो द्वौ पुत्रौ भक्तिसम्पन्नौ ।
**श्रीलजगन्नाथ** इति ज्यायानासीद्गुणाऽग्रणीर्धीमान् ॥ ६ ॥
तदनुजनुर्गुरुभक्तः **शिवदत्तो**ऽहं समाख्यया प्रथितः ।
पित्रोः परिचरणपरः शास्त्राऽम्बुधिमज्जने रसिकः ॥ ७ ॥
**वागीश्वरी** नाम ममाऽऽद्यपत्नी, **सावित्रि**काया प्रसवित्रिकाऽऽसीत् ।
सा **द्रौपदी** नाम मदन्यपत्नी, **पुष्पा**प्रसूर्द्वे अपि मुक्तिभाजौ ॥ ८ ॥
पौरस्त्य-पाश्चात्त्य-विशिष्टविद्या कलाप्रवीणस्य विचक्षणस्य ।
**सत्यव्रत**स्याऽस्ति कलत्ररत्नं **सावित्रि**का नाम मदीयकन्या ॥ ९ ॥
कनीयसी मे दुहिताऽस्ति **पुष्पा**, श्रीमद्-**रमेशा**ख्यबुधस्य पत्नी ।
उभे मदीये तनये, स्वधर्मं, सम्पाद्य सौभाग्य-समन्विते स्तः ॥१०॥
आचार्योऽहं शब्दशास्त्रे तथैव, साहित्याऽब्धिर्ग्रन्थनिर्माणशीलः ।
तन्त्रे, स्तोत्रे, व्याकृतौ धर्मशास्त्रे, सन्ति ग्रन्था निर्मिता मामकीनाः ॥११॥
अद्याऽवधि ग्रन्थशताऽधिकं मे प्रकाशितं भूरिपरिश्रमेण ।
अशान्तयत्नेन कृतिं करोमि शास्त्रोक्तकृत्यं विदधामि नित्यम् ॥१२॥
स्वचित्त-शिष्टा-ऽऽस्तिक-तोषणाय निरन्तरं शास्त्रचयं समीक्ष्य ।
मया प्रणीता विविधाः प्रबन्धाः संप्रार्थये तत्र सतां सुदृष्टिम् ॥१३॥

●

# दुर्गार्चन-पद्धतिस्थ-वैदिकमन्त्राणामनुक्रमणी

*इति दुर्गार्चन-पद्धतिस्थ-वैदिकमन्त्राणामनुक्रमणी समाप्ता ।*

# दुर्गार्चनपद्धतिस्थ-पौराणिक-श्लोकानामनुक्रमणी

*इति दुर्गार्चनपद्धतिस्थ-पौराणिकश्लोकानामनुक्रमणी समाप्ता ।*

*इति दुर्गार्चनपद्धतौ परिशिष्टं समाप्तम् ।*



# चतुर्लिङ्गतोभद्रचक्रम्



रेखा त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे। कोणेन्दुस्त्रिपदैः श्वेतस्त्रिपदैः कृष्णशृङ्खला ।।१।।

वल्ली सप्तपदा नीला भद्रं रक्तं चतुष्पदम् । भद्रपार्श्वे महारुद्रं कृष्णामष्टादशैः पदैः ।।२।।

शिवस्य पार्श्वतो वापी कुर्यात् पञ्चपदां सिताम् । पदमेकं तथा पीतं भद्रवाप्योस्तु मध्यतः ।।३।।

शिरसि शृङ्खलायाश्च कुर्यात् पीतं पदत्रयम् । लिङ्गानां स्कन्धतः कोष्ठा विंशती रक्तवर्णका ।।४।।

परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृता । पदैस्तु नवभिः पश्चाद् रक्तं पद्मं सकर्णिकम् ।।५।।

# चतुःषष्टिपदं वास्तुमण्डलचक्रम्



हर प्रकार की धार्मिक पुस्तकों के मिलने का पता :

**श्री ठाकुर प्रसाद पुस्तक भण्डार,** कचौड़ीगली, वाराणसी-२२१ ००१

फोन नं० : २३९२४७१, २३९२५४३



# नवग्रहचक्रम्



शुक्रार्कौ प्राङ्मुखौ ज्ञेयो, गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखौ शनिः सोमः, शेषाः दक्षिणतो मुखाः ।।१।।
आदित्याऽभिमुखाः सर्वे, साऽधि प्रत्यधिदेवताः । स्थापनीया मुनिश्रेष्ठाः, नाऽन्तरेण पराङ्मुखाः ।।२।।

# योगिनीयन्त्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ॐ दिव्ययोगिन्यै नमः १ | ॐ महायोगिन्यै नमः २ | ॐ सिद्धयोगिन्यै नमः ३ | ॐ गणेश्वर्यै नमः ४ | ॐ प्रेताक्ष्यै नमः ५ | ॐ डाकिन्यै नमः ६ | ॐ काल्यै नमः ७ | ॐ कालरात्र्यै नमः ८ |
| ॐ निशाचर्यै नमः ९ | ॐ झङ्कार्यै नमः १० | ॐ रौद्रवेताल्यै नमः ११ | ॐ भूतल्यै नमः १२ | ॐ भूतऽम्बर्यै नमः १३ | ॐ ऊर्ध्वविभ्यै नमः १४ | ॐ विरूपाक्ष्यै नमः १५ | ॐ शुष्काङ्ग्यै नमः १६ |
| ॐ नरभोजिन्यै नमः १७ | ॐ भट्टार्यै नमः १८ | ॐ वीरभद्रायै नमः १९ | ॐ धूम्राक्ष्यै नमः २० | ॐ कलहप्रियायै नमः २१ | ॐ राक्षस्यै नमः २२ | ॐ घोररक्ताक्ष्यै नमः २३ | ॐ विश्वरूपायै नमः २४ |
| ॐ भयङ्कर्यै नमः २५ | ॐ चण्डिकायै नमः २६ | ॐ वीरकौमार्यै नमः २७ | ॐ वाराह्यै नमः २८ | ॐ मुण्डधारिण्यै नमः २९ | ॐ सासुर्यै नमः ३० | ॐरोद्रझङ्कार-भाषिण्यनमः ३१ | ॐ त्रिपुरान्त-कायै नमः ३२ |
| ॐ भैरवध्वं-सिन्यै नमः ३३ | ॐ क्रोधदुर्मुख्यै नमः ३४ | ॐ प्रेतवाहिन्यै नमः ३५ | ॐ खट्वाङ्ग्यै नमः ३६ | ॐदीर्घलम्बोष्ठ्यै नमः ३७ | ॐ मालिन्यै नमः ३८ | ॐ मन्त्रयोगिन्यै नमः ३९ | ॐकालाग्नि-गहण्यै नमः ४० |
| ॐ क्षत्रयै नमः ४१ | ॐ कङ्काल्यै नमः ४२ | ॐ भुवनेश्वर्यै नमः ४३ | ॐ कटक्यै नमः ४४ | ॐ कीटिन्यै नमः ४५ | ॐ रौद्र्यै नमः ४६ | ॐ यमदूतयै नमः ४७ | ॐ करालिन्यै नमः ४८ |
| ॐ घोराक्ष्यै नमः ४९ | ॐ कार्मुक्यै नमः ५० | ॐ काकदृष्ट्यै नमः ५१ | ॐ अधोमुख्यै नमः ५२ | ॐ मुण्डाग्रधा-रिण्यै नमः ५३ | ॐ व्याघ्र्यै नमः ५४ | ॐ किंकिण्यै नमः ५५ | ॐ प्रेतभाषिण्यै नमः ५६ |
| ॐ कालरूपायै नमः ५७ | ॐ कामाख्यायै नमः ५८ | ॐ उद्रिण्यै नमः ५९ | ॐयोगपीठि-कायै नमः ६० | ॐ महालक्ष्म्यै नमः ६१ | ॐ एकवीरायै नमः ६२ | ॐ कालरात्र्यै नमः ६३ | ॐ पीठिकायै नमः ६४ |

## क्षेत्रपालयन्त्रम्

| | | | | | | |
|---|---|---|---|---|---|---|
| ॐ अजराय नमः १ | ॐआपकुम्भाय नमः २ | ॐ इन्द्रस्तुतये नमः ३ | ॐ ईडाचाराय नमः ४ | ॐ उक्तसंज्ञाय नमः ५ | ॐ ऊष्मादाय नमः ६ | ॐ ऋषिसूद-नाय नमः ७ |
| ॐ ऋमुक्ताय नमः ८ | ॐ लृप्तकेशाय नमः ९ | ॐ लृपकाय नमः १० | ॐ एकदंष्ट्रकाय नमः ११ | ॐ ऐरावताय नमः १२ | ॐ ओघबन्धवे नमः १३ | ॐऔषधीशाय नमः १४ |
| ॐ अञ्जनाय नमः १५ | ॐ अस्त्रुवागय नमः १६ | ॐ कवलाय नमः १७ | ॐ खरुखान-लाय नमः १८ | ॐ गोमुख्याय नमः १९ | ॐ घण्टादाय नमः २० | ॐ ङमनसे नमः २१ |
| ॐ चण्डवार-णाय नमः २२ | ॐ छटाटोपाय नमः २३ | ॐ जटलाय नमः २४ | ॐ झङ्गीवाय नमः २५ | ॐ ग्रहश्वराय नमः २६ | ॐ टङ्कपाणये नमः २७ | ॐ ठानबन्धवे नमः २८ |
| ॐ डामराय नमः २९ | ॐ ढक्कारवाय नमः ३० | ॐ णवार्णवाय नमः ३१ | ॐ तडिद्दहाय नमः ३२ | ॐ थिराय नमः ३३ | ॐ दन्तुराय नमः ३४ | ॐ धनदाय नमः ३५ |
| ॐ नतिकृता-न्ताय नमः ३६ | ॐ पण्डकाय नमः ३७ | ॐ फट्काराय नमः ३८ | ॐ वीरसङ्घाय नमः ३९ | ॐ भृङ्गाय नमः ४० | ॐमेघभासुराय नमः ४१ | ॐ युगान्ताय नमः ४२ |
| ॐ रौद्यवाय नमः ४३ | ॐ लम्बोष्ठाय नमः ४४ | ॐ वसवाय नमः ४५ | ॐ शूकनन्दाय नमः ४६ | ॐ षडालाय नमः ४७ | ॐ सुनाम्ने नमः ४८ | ॐ हम्बुकाय नमः ४९ |

# कुण्डस्वरूपम्




| | | |
|---|---|---|
| योनि १२ अंगुली ऊँची | १२ अंगुल लम्बी | ८ अंगुल चौड़ी रक्तवर्ण |
| सफेद ऊपर की सीढ़ी | ४ अंगुल चौड़ी | ४ अंगुल ऊँची १ |
| लाल उसके नीचे की | ३ अंगुल चौड़ी | ३ अंगुल ऊँची २ |
| काली उसके नीचे की | २ अंगुल चौड़ी | २ अंगुल ऊँची ३ |


पश्चिम
त्रिकोणम्


पश्चिम
चतुष्कोणात्मम्

| | |
|---|---|
| विश्वकर्मा प्रकाश भाषा टीका | ७५.०० |
| मुहूर्तचिन्तामणि भाषा टीका | ६०.०० |
| लघु संग्रह भाषा टीका | ५०.०० |
| घाघ-भड्डरी की कहावतें भाषा टीका बड़ा | २५.०० |
| स्त्री-जातक भाषा टीका | २५.०० |
| लग्नचन्द्रिका भाषा टीका | ४०.०० |
| चमत्कारचिन्तामणि भाषा टीका | ८.०० |
| होडाचक्र भाषा टीका | ४.०० |
| जन्मपत्रप्रबोध भाषा टीका | ६.०० |
| महावीर प्रश्नावली | २.०० |
| राशिमाला | ४.०० |
| शीघ्रबोध भाषा टीका | २५.०० |
| हनुमान ज्योतिष | १०.०० |
| शिवस्वरोदय भाषा टीका | २५.०० |
| ग्रहशान्ति पद्धति भाषा टीका | ८०.०० |
| यज्ञ-मन्त्र-संग्रह | २००.०० |
| प्रभु विद्या प्रतिष्ठार्णव (सर्वदेव प्रतिष्ठा मयूख) | २००.०० |
| विधान प्रकाश भाषा टीका | १००.०० |
| गरुड पुराण भाषा टीका | ४०.०० |
| कुण्ड निर्माण स्वाहाकार पद्धति भाषा टीका | ५०.०० |
| विष्णुयाग पद्धति भाषा टीका | २००.०० |
| विवाह पद्धति भाषा टीका | २५.०० |
| पञ्चरत्न-विवाह पद्धति भाषा टीका | २५.०० |
| श्राद्ध-विवेक भाषा टीका | २.०० |
| प्रेतमंजरी भाषा टीका | ३०.०० |
| उपनयन पद्धति भाषा टीका | २५.०० |
| वाशिष्ठी हवन पद्धति भाषा टीका | २५.०० |
| नित्यकर्म पद्धति भाषा टीका | १०.०० |
| गणपति प्रतिष्ठा पद्धति भाषा टीका | २५.०० |
| कुम्भ विवाह प्रयोग भाषा टीका | ८.०० |
| धनिष्ठादि पञ्चक शान्ति भाषा टीका | २०.०० |
| पार्वण श्राद्ध पद्धति भाषा टीका | ८.०० |
| विश्वकर्मा-कथा पूजा पद्धति भाषा टीका | ८.०० |
| गृहवास्तु शांति पद्धति भाषा टीका | ३०.०० |
| सुगम वास्तु शांति प्रयोग भाषा टीका | १५.०० |
| मूलशान्ति भाषा टीका | ५.०० |
| शुक्लयजुर्वेदीय सन्ध्योपासन भाषा टीका | ५.०० |
| सर्वदेव पूजा पद्धति भाषा टीका | ५.०० |
| गोदान-तुलादान पद्धति | ४.०० |
| देवर्षि-पितृ-तर्पण भाषा टीका | ४.०० |
| पार्थिव पूजन विधि भाषा टीका | ४.०० |
| पञ्चदेवता पूजा पद्धति भाषा टीका | ४.०० |
| सत्यनारायण व्रत कथा ७ अध्याय भाषा टीका | ८.०० |
| सत्यनारायण व्रत कथा ५. अध्याय, भाषा टीका | ६.०० |
| सत्यनारायण व्रत कथा ५ अध्याय 'शिवदत्ती' टीका | १५.०० |
| सविधि सत्यनारायण विवाह पद्धति सहित | १५.०० |
| अन्नपूर्णा व्रत-कथा भाषा टीका | १५.०० |
| शिवरात्रि व्रत कथा भाषा | ८.०० |
| त्रिलोकीनाथ व्रत कथा भाषा | ५.०० |
| सङ्कष्टी गणेश चतुर्थी व्रत-कथा भाषा टीका | ६०.०० |
| सङ्कष्टी गणेश चतुर्थी व्रत-कथा भाषा | २५.०० |
| करवाचौथ-अहोई-अष्टमी-दीपावली-कथा | ५.०० |
| वट सावित्री व्रत-कथा भाषा टीका | ८.०० |

मुद्रक - **भारत प्रेस**, कचौड़ीगली, वाराणसी-१